Digitized by Madhuban Trust, Delhi

# सामवेदसंहिता

## उत्तरार्च्चिकः

## प्रथमादि-प्रपाठकत्रयात्मकः

### तृतीयो भागः

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहितः

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन
**श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण**
वङ्गसामगेन
टीकितो यथावसरं शोधितश्च।



मुन्शीराम मनोहरलाल
पब्लिशर्स प्रा.लि.



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# SĀMAVEDA SAṀHITĀ

with the commentary of Sāyaṇa Āchārya

*Edited by*

Satyavrata Sāmaśramī Bhattacharyya

VOLUME III



Price : Rs 3500 for 5 volumes

Originally Published in Bibliotheca Indica, Calcutta, 1871-78.
New Series nos. 339, 340, 342, 347, 348, 351 and 355.

Reprinted 1983

Printed and published by Munshiram Manoharlal Publishers Pvt. Ltd.,
Post Box 5715, 54 Rani Jhansi Road, New Delhi-110055.



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# ॥ मन्त्राणामकारादिक्रमेण सूची ॥

——0*0——





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्त्रप्रतीकम् ... पृष्ठम्





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्त्रप्रतीकम् ... पृष्ठम्





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# [ ज ]





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्त्रप्रतीकम् | पृष्ठम्





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

[ ञ ]





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्त्रप्रतीकम् पृष्ठम्





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्त्रप्रतीकम् पृष्ठम्





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# [ त ]





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्त्रप्रतीकम् पृष्ठम्





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

Digitized by Madhuban Trust, Delhi



| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|


---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ उत्तरार्चिकः ॥

॥ अथ भाष्यावतरणिका ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्—
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत् सायणाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तु मुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
छन्दोभिधाभूद् व्याख्याता व्याख्यास्यत्युत्तराभिधाम् ॥ ५ ॥
छन्दस्येकैकशोऽधीता ऋचः सामोद्भवाय हि ।
स्तोम-निष्पत्तये सूक्तान्युत्तराया मधीयन्ते * ॥ ६ ॥

---

* छन्दसि पूर्वार्चिकाख्ये एकैकशः ऋचः अधीताः, यासु गानं भवतीति भावः ; तत्र सामोद्भवमात्रं प्रयोजनम्, सामोद्भवस्तु एकस्या अपि भवितव्य एव ; परं स्तोम-निष्पत्तिस्तु तथा न भवेत् अत एव उत्तरायां सूक्तानि तृच-द्वृच-रूपाणि अधीयन्ते ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्तोमशब्देनोत्पत्तिषु सोमयागेषु प्रयुज्यमानास्त्रिवृत्पञ्च-दशादयोऽभिधीयन्ते। अतएव तैत्तिरीयकाः प्रश्नोत्तराभ्या मिद-मामनन्ति। तदाहुः—"कतमा वाव तानि ज्योतींषि य एतस्य स्तोमा इति? त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि यएतस्य स्तोमाः"—इति। छन्दोगास्त्र त्रिवृ-दादि-स्तोमानां स्वरूपं ब्राह्मण-द्वितीय-तृतीययोरध्याययोः * बहुधा समामनन्ति। ते च बहुभिरवान्तररूपोपेताः समाम्नाताः स्तोमा नवसङ्ख्याकास्तेषु पूर्वोक्तास्त्रिवृदादयश्चत्वारः त्रिणव-त्रयस्त्रिंशौ त्रिनवसङ्ख्योपेतः स्तोमस्त्रिणवइत्युच्यते। छन्दोमना-मका स्तोमास्त्रयस्तेषु चतुर्विंशाख्यस्तोमः प्रथमः। गायत्रीच्छन्द-सा चतुर्विंशत्यक्षरोपेतेन मीयतइति छन्दोमः। चतुस्त्रिंशश्चत्वा-रिंशाख्यो द्वितीयः। स च त्रिष्टुप्छन्दसा मीयते। अष्टाचत्वारिं-शाख्यस्तृतीयः। सोऽपि जगतीच्छन्दसा मीयते॥ नन्वथ ये इयाम्नातलक्षणोपेतेभ्यस्त्रिवृदादिभ्योऽष्टादश-नवदशादि--नामका बहवः स्तोमा विद्यन्ते। तथाच तैत्तिरीयकाः केषुचिदिष्ट-कोपधान-मन्त्रेषु देवतावद्रूपेष्टकात्व-विवक्षया तान् स्तोमा-नामनन्ति—"आशास्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः। प्रतू-र्त्तिरष्टादशस्तपोनवदशोऽभिवर्त्तःसविंशो धरुण एकविंशो वर्चो-द्वाविंशः सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भः पञ्चविंश ओजस्त्रिणवः क्रतुरेकविंशो ब्रध्नस्य विष्टपश्चतुस्त्रिंशो नाकषट्-त्रिंशोऽभिवर्त्तोऽष्टचत्वारिंशः"—इति। एवन्तर्हि सन्त्येव बहूनि

* ताण्ड्यमहाब्राह्मणस्येति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्तोमान्तराणि तेषां लक्षणानि तु ब्राह्मणान्तरानुसारेण सूत्रकारैर्व्युत्पादितानि ॥ ते च स्तोमाः सर्वेऽप्याज्यपृष्ठादि-स्तोत्रेषूपयुक्ताः "पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि"—इत्यादि-श्रुतिभ्यः स्तोम-विषयाः स्तोत्रविषयास्तन्निष्पादक-साम-विषयाश्च । सर्वेऽपि विचारा अस्माभिश्छन्दोव्याख्यानावतारवेलाया मेव जैमिनीयान्यधिकरणान्युदाहृत्य प्रदर्शिताः * ॥ किं बहुना "एकं साम तृचे क्रियते स्तोत्रियम्"†—इत्यादि-वचनैः स्तोत्रनिष्पादकस्य साम्नस्तृच्प्रगाथादि-रूपाणि सूक्तान्याश्रयत्वेनोत्तराख्ये संहिता-ग्रन्थे समाम्नातानि । स च ग्रन्थ एकविंशति-सङ्ख्यातै रध्यायै रुपेतः ‡ ॥

———

* १ भा० २० पृ०—२८ पृ० द्रष्टव्यम् ।

† द्रष्टव्योऽस्यार्थः १भा० २० पृष्ठे ।

‡ मूलपुस्तकस्य तु अध्यायसङ्ख्या नैव दृश्यते, परं सन्ति तत्र प्रत्यध्यायमर्द्धाध्यायः अध्यायद्वयेऽर्द्धाध्यायद्वयञ्च, पदग्रन्थे च तथा, विवरणादावप्येवमेव । सायणमते तु अर्द्धाध्यायानङ्गीकारस्ततश्चैकविंशतितमं सुलभमिति । अध्यायेति व्यवहारश्च सायणीय एव, वस्तुतः सामवेदे प्रपाठकव्यवहार एव सर्वमूलपुस्तक-पदपुस्तक-गानपुस्तकादौ विवरणकारमते च प्रसिद्धः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ, प्रथमाध्यायस्य प्रथमखण्डे, *

प्रथमसूक्ते तृचे, येयमृक् प्रथमा

सैव साम्नायते—

१ २ २ १ २ २ १ १

उपास्मैगायतानरःपवमानायेन्दवे ।

१ २ ३ १ २र

अभिदेवाꣳइयक्षते ॥ १ ॥ †

हे "नरः" नेतारः! यज्ञस्य, "देवान्" इन्द्रादीन् "अभि इयक्षते" आभिमुख्येन यष्टु मिच्छते "पवमानाय" क्षरते "अस्मै" अभिषूयमाणाय "इन्दवे" सोमाय "उप गायत" उपगानं कुरुत ॥ १ ॥

अथ द्वितीया ।

१ २३१२१ १ २र

अभितेमधुनापयोथर्वाणोअशिश्रयुः ।

२१२१ २ १२

देवन्देवायदेवयुः ॥ २ ॥

हे सोम! "ते" तव "देवं" देवनशीलं "देवयुः" देव-कामं रसं ‡ "देवाय" देवनशीलायेन्द्राय "मधुना" ¶ "पयः" गव्येन

* अत्र ग्रन्थे खण्ड-व्यवहारोऽपि सायणेनाविष्कृतः ।

† इयमेव ऋक् अत्रैव प्रपाठके द्वितीयार्द्धेऽपि दृश्यते (१८, २)।

‡ 'देवयुः देवान् यजति यः सोमेन च देवयुः'—इति वि०। 'देवयवः'—इति
श्रौति प्रामाण्य चरणं नैघण्टुकम् (१, १८)।

¶ 'मधुना स्वादुना'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पयसा * "अथर्वाणः" ऋषयः † "अभ्यश्रिश्रयुः" अभ्यश्रिश्रयन् सम्यक्कुर्वन्नित्यर्थः ‡ ॥ २ ॥

अथ तृतीया ।

१ २   ३ १ ३ ३ १   १ २ ३ १ २र
सनःपवस्वशङ्गवेशञ्जनायशमर्वते ।

१ २ ३ १ २
शꣳराजन्नोषधीभ्यः ॥ ३ ॥ १ ¶

हे "राजन्" दीप्यमान सोम ! "सः" प्रसिद्धस्त्वं "नः" अस्माकं § "गवे" ‖ "शं" सुखं "पवस्व" क्षर + "जनाय"

---

* 'पयः प्रथमैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्। पयसा सोममिश्रणं कुर्वन्ति'—इति वि०।

† 'सोममिश्रणं कुर्वन्ति के? अथर्वाणः ऋत्विजः। अथवा अथर्वा नाम ऋषिः आत्मीयान् पुत्रपौत्राननुशास्ते—ते अथर्वाणः!'—इति वि०।

‡ 'अभीत्ययमुपसर्गः अश्रिश्रयुरित्याख्यातेन सह सम्बन्धयितव्यः। अभ्यश्रिश्रयु=आभिमुख्येन ते तत्र अश्रिश्रयुः=मिश्रणं कृतवन्तः'—इति वि०।

¶ एतास्तिस्र ऋचः—ऋग्वेदे ९, ७, ३६, १-२-३ अपि दृश्यन्ते। आसां ऋषि-सन्देहस्तु—"असितः काश्यपो देवलो वा"—इति ऋषि नै०। दैवत-सन्देहोऽपि यथा—"उत्तरासु रहस्याम्नायास्तु देवताः। पूर्वोक्ता ऋचस्ता एवोत्तरासूपास्ते यथाश्रुताः। सौम्याः स सोमः पार्थिवः"—इति दैवत नै०॥

§ 'नः अस्माकम्'—इति वि०।

‖ 'चतुर्थ्येकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम्। गोभ्यो बहुभ्यः'—इति वि०।

+ 'पवस्व प्रस्रवस्व'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पुत्राय च * "शं" पवस्व "अर्वते" अश्वाय † च "शं" पवस्व "ओषधीभ्यः" च ‡ शम्पवस्व ॥ ३ ॥ १

४ ३ ५ ४ २ ४५
॥ यज्ञायज्ञीयम् ॥ उपा॑ऽ५स्मै। गा३या३ताना

५ २ १ २ २ १ २ १ २ २
रा:। पा३वामाइना। या२३श्मा। ऊम्मायि। दा३वा

१ २९ ३२ १ २ १५
यि। आभिर्देवाऽ२इयार२क्षताउ॥ ते (१)॥ आ। भिते

२ १ २ २ १ १५ ५ २ १
मा। धूइनापा३याः। आथा२र्वा। गोआ२३शा। ऊ

२ २ १ ५५ ३२ १
म्मायि। आ३यू:। दायिवन्देवायदा२यिवयाउ॥ यू(२)॥

२ १ २ १ २ २ १ १५
सा:। नःपवा। स्वा३शाङ्गा३वायि। शञ्जा२ना। य

२ १ २ २ १ ५ ५
शा२३मा। ऊम्मायि। वी३तायि। शाऽ२राजन्नोषधा

३ २
२यिभ्यआउ॥ (३)॥ ११ ¶॥ १

---

* 'शं जनाय सुख ऋत्विग्जनाय'—इति वि०।

† 'श मर्वते यजमानजनाय'—इति वि०।

‡ 'ओषधीभ्यः व्रीहि यव-तिल-माषादिभ्यः'—इति वि०।

¶ सामवेदमूहगानस्यैकविंशप्रपाठक-प्रथमार्द्धस्यैकादशम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीयतृचे—प्रथमा।

१ २   ३१ २३१ २   ३ २
दविद्युतत्यारुचापरिष्टोभन्त्याकृपा।
१ २ ३ १ २र
सोमाःशुक्रागवाशिरः॥ १ ॥

"दविद्युतत्या रुचा" अतिशयदीप्त्या "परिष्टोभन्त्या" परितः शब्दायमानया "कृपा" धारया च युक्ताः "सोमाः" "गवाशिरः" गवाशिराः भवन्ति गव्येन पयसा मिश्रिता भवन्ति इत्यर्थः* ॥१॥

अथ द्वितीया।

२   २ ३ १ २ ३ १   २र ३क २र
हिन्वानोहेतृभिर्हितआवाजंवाज्यक्रमीत्।
१ २   ३ १ २
सीदन्तोवनुषोयथा॥ २ ॥

"वाजी" बलवान् सोमः "हेतृभिः" प्रेरकैः स्तोतृभिः† "हिन्वानः" स्तोत्रैः स्तूयमानः "हितः" अभीष्टकारी सन् "वाजं" यागाख्यं युद्धम् "आ अक्रमीत्" आक्रामति। तत्र दृष्टान्तः—

---

* "दविद्युतत्या देदीप्यमानया रुचा। परिष्टोभन्त्या परि समन्तात् स्तोभन्त्या पुनः पुनः स्तोभः अभ्यासः अभ्यस्यमानया। कृपा कान्त्या। सोमाः शुक्राः शुक्लवर्णाः। कथं शुक्लवर्णा भवन्ति? गवाशिरः कारणे कार्यवदुपचारः गोक्षीराशिरः। आशिरं मिश्रम्॥"—इति वि०।

† "प्रहेतारं शत्रूणां प्रेरकम्"—इति ऋ० भा० ९, ९, ५, १ सा० द्रष्टव्यम् (१भा० ५८१प०)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा "वनुषः" हन्तारो भटाः * "सीदन्तः" युद्धं प्रविशन्तः आक्रामन्ति तद्वदित्यर्थः † ॥ ३ ॥

अथ तृतीया ।

३ १ २ ३ १ २ २ २ ३ १ २
ऋधक्सोमस्वस्तयेसञ्जग्मानोदिवाकवे ।
१ २ ३ १ २ ३ २
पवस्वसूर्योदृशे ॥ ३ ॥ २ ‡

हे "सोम" ! "कवे" क्रान्तदर्शिन् ! "सूर्य्यः" सुवीर्यः ¶ त्वं "ऋधक्" ऋध्नुवत् । तथाच यास्कः—"ऋधगिति पृथग्भावस्यानुप्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते (निरु० नै० ४, २५)"—

* "वनुष्यति"—इति क्रुध्यतिकर्मसु अष्टमं नैघण्टुकम् २. १२। "वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति 'वनुयाम वनुष्यत' इत्यपि निगमो भवति"—इत्यादि निरु० नै० ५, २ ।

† 'हिन्वानः नीयमानः प्रीयमानो वा । कैः हेतुभिः? चरणस्वभावैर्ऋत्विग्भिः आ वाजम् । आ शब्दः उपसर्गः । अक्रमीदित्याख्यातेन सम्बन्धयितव्यः आभिमुख्येन अक्रमीत् वाजं वाजी वाजमन्नं, यज्ञपुरोडाशादि-लक्षणस्यान्नस्य स्वामी अथवा वाजं द्रोणकलशम् आक्रमीत् सोमः । कथमाक्रमीत्? सीदन्तो वनुषो यथा । सीदन्तः उपविशन्तः वनुषः मनुष्यः एकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम् । वनुषाः मनुष्याः उच्यन्ते । यथा उपविशन्तो मनुष्याः आसन माक्रमन्ति तद्वत् द्रोणकलशं सोमः'—इति वि० ।

‡ ऋ० वे० ७, १, ४१, १-४-५ । ऋ० "कश्यपो मारीचः" इति ऋषि-नै० । छन्दोदेवते पूर्ववत् ।

¶ 'सूर्यः दृशे, सूर्यः ( इव शब्द आहुयते । दृशे दर्शनाय । यथा सूर्यं उदेति विश्वस्य जगतो दर्शनाय तद्वत् त्वमपि पवस्वेत्यभिप्रायः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इति । "सञ्जग्मानः" सङ्गच्छमानः "स्वस्तये" "दृशे" दर्शनाय "दिवा" दिवः विभक्तिव्यत्ययः* ॥ "पवस्व"-"चर"—"दिवाकवे"-"दिवाकविः"—इति पाठौ ॥ ३ ॥ २

४ ३ ४ २ ४र ५
॥ यज्ञायज्ञीयम् ॥ दवाऽ५यिद्यु । ता३तो३याहूचा ।
२ १ २ २ १ २ १ २ १
पा३रायिष्टो३भा । ता२३आ । ऊम्मायि । का३र्षा ।
१ र र ३ २ १ २ १र र २
सोमाःपुऽक्रागवार्शिराउ ॥ रा(१)द्यायि । न्वानोहोटू
१ २ २ १र १ र २ १
३भायिर्हो३यिताः । आबा२जम् । वाजार२३या । ऊ
२ १ १ र ३ २ २ १
म्मायि । क्रा३मीत् । सायिदन्तोवनुषो२यथाउ ॥ या(२)
२ १ र २ १ २ २ १ १र
च । धक्सोमा । द्यु३वास्ता३यायि । सञ्जा२ग्मा ।
र २ १ २ १ १र र
नोदार३यिवा । ऊम्मायि । का३वायि । पावस्वहरियो२
३ २
दृशाउ (३) ॥ १२ † ॥ [१]२

* 'दिवा कवे अहन्यहनि हे मेधाविन् !'—इति वि० ।

† ऊ० गा० २१ प्र०१ अ० १२ सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तृतीय-तृचे—प्रथमा ।

१ २ ३ २ ३ १ २
पवमानस्यतेकवेवाजिन्त्सर्गाअसृक्षत ।

१ २ ३ १ २ ३ १ २
अर्वन्तोनश्रवस्यवः ॥ १ ॥

मार्जनप्रसङ्गादाह—हे "कवे" क्रान्तप्रज्ञ ! हे "वाजिन्" अन्नवन् सोम ! "पवमानस्य" दशापवित्रेण पूयमानस्य "ते" तव "सर्गाः" सृज्यन्ते इति सर्गा धाराः * । कीदृश्यः ? "श्रवस्यव." ["छन्दसि परेच्छायां क्यच् (३,१,८वा०] यद्दृणा मन्नं कामयमानास्त्वदीया धारा "असृक्षत" विसृजन्ति निर्गच्छन्तीत्यर्थः । तत्र दृष्टान्तः—"अर्वन्तो न" यथा अश्वा मन्दुरातो निर्गच्छन्ति तद्वत् पवित्रान्निःसरन्तीत्यर्थः † । प्रयोगापेक्षं चात्र धारा-बाहुल्यम् ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ २ ३१ २ ३१ २ ३१ २
अच्छाकोशम्मधुश्चुतमसृग्रंवारेअव्यये ।

१ २ ३ १ २
अवावशन्तधीतयः ॥ २ ॥

धारानिर्गमनप्रसङ्गादभिधीयते—"मधुश्चुतं" मधुररसस्य श्रावयितारं चारयितारं "कोशं" द्रोणकलशम् "अच्छ" अभि-

---

* 'सर्गाः उदकस्य अन्योन्यकर्म्मयः सङ्घाताः'—इति वि० ।

† 'अर्वन्तः यजमानाः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



लक्ष्य* "अव्यये" अवि-स्वभूते "वारे" वाले दशापवित्रे "असृग्रं" सोमाः ऋत्विग्भिरभिरज्यन्ते [सृजेः कर्म्मणि तिङातिङो भवन्तीति टेरमादेशः]। किञ्च। "धीतयः" [अङ्गुलि नामैतत् † धयन्ति पिबन्त्याभिरिति] अस्मदीया अङ्गुलयः "अवावशन्त" तान् सोमान् न पुनः पुनर्मार्जनार्थं कामयन्ते‡ ॥ २ ॥

अथ तृतीया।

१ २ ३१उ ३ २ ३ २ ३२३१२
अच्छासमुद्रमिन्दवोस्तङ्गावोनधेनवः।
१ २३२३२ ३२
अग्मन्नृतस्ययोनिमा ॥ ३ ॥ ३ ¶

"इन्दवः" क्षरन्तः सोमाः "समुद्रं" सोमाना मेकत्रैव सङ्गमनस्थानं द्रोणकलशम् "अच्छ" अभि गच्छन्ति। तत्र दृष्टान्तः —"धेनवः" पयः-प्रदानेन जनानां प्रीणयित्र्यो नवप्रसूतिका गावः "अस्तं" गृहं यथा अभि गच्छन्तीति तद्वत् §। किञ्च ते

---

* 'अच्छ आप्नुम्'—इति वि०।

† "धीतयः"—इति अङ्गुलिनामसु सप्तमं नघण्टुकम् २, ५।

‡ 'धीतयः धीतिः बुद्धिः बुद्धिमन्तः सोमाः। अथवा अवावशन्त कामयन्तु के धीतयः ऋत्विजः, किं कामयन्त ? सोमस्य पावनं द्रोणकलशगमनञ्च'—इति वि०।

¶ ऋ० वे० ७, २, ८, ५—९, १, २। ऋ० "वैखानसा आङ्गिरसः"—इति ऋषि नै०।

§ 'कथमाप्नुम् ? अस्तं गावो न धेनवः। अस्तमनकाले गावो न शब्द उपरिष्टा-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सोमाः "ऋतस्य योनिं" सत्यभूतस्य यज्ञस्य* योनिं स्थानम् "आ" अग्मन्" आभिमुख्येन गच्छन्ति। [गमेर्लुङि सिचो लुकि उपधालोपः ॥ ३ ॥ ३

४ २ र ४ २ ४र ५
॥ यज्ञायज्ञीयम् ॥ पवाऽ५मा। मा३ख्या३तेकावायि।
२ १ २ २ १ २ १ २ २
वा३जायिन्मा३र्गाः। आ२३सा। ऊम्मायि। चा३ता।
१ र २२ १ २ १र र
आर्वन्तोनश्रवा२स्यवाउ ॥ वा(१)आ+ च्छाकोशाम्।
२ १ २ २ १ १ र २ १
मा३धूश्चू३ताम्। असा२र्यम्। वारे२३आ। ऊम्मायि
२ २ १ र २२ १ २
व्या३यायि। आवावश्नन्तधा२यितयाउ ॥ या(२)आ।
१ २ १ २ २ १ १र र
च्छासम्। द्रा३मायिन्दा३वाः। अस्ता२ङ्गा। वीना२
२ १ २ २ १ २२
३धे। ऊम्मायि। ना३वाः। आग्मन्नृतस्ययो२निमाउ।
१ १ १ १
वा३४५(३)॥ १३ † ॥ [१]३

---

द्रुपमार्थीयः गावः इव धेनवः यथा अस्तमनकाले वत्सानतियन्ति स्वेच्छा-इढाः"—इति वि०।

* 'ऋतस्य यज्ञस्य प्रजापते र्वा'—इति वि०।

† ऊ० गा० २१ प्र० १ ख० १३ सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य प्रथमः खण्डः * ॥ १ ॥

* 'ज्योतिष्टोमिकं बहिष्पवमानं समाप्तम्'—इति वि०। "तदिदं सूक्तत्रय-गानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते। तत्रावस्थितानामृचां पवमानार्थत्वाद् बहिःसम्बन्धाच्च"—इति मी० द० जै० अ० ६ अध्या० ४पा० ३ अधि०। न खल्विदं स्तोत्रम् इतरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्भशाखायाः सन्निधौ प्रयुज्यते किन्तु सदसो बहिः प्रसर्पद्भिः प्रयुज्यते। 'बहिष्पवमान'-नाम वेदो, यत्र स्थितं तद्बहिष्पवमाननामनवर्क्-साध्य-त्रिवृन्नामस्तोमपाठपूर्वकं मार्जनं भवति; 'सा तु उदग्वंशनामशालान्तर्गत-सदोमण्डपात् पश्चिमस्याः प्राचीनवंशनामशालान्तर्गते-ष्टिकवेदेरुत्तरतो विद्यते, अस्य च बहिष्पवमानस्य प्रकृतियागेऽग्निष्टोमादौ त्रिवृन्ना-मकः स्तोमो भवति, एतद्विधायकं ब्राह्मणवाक्यं ताण्ड्यद्वितीयप्रपाठकारम्भे एव खण्डत्रयात्मकं द्रष्टव्यम्—'तिसृभ्यो हिङ्करोतीत्यादि'। अत्र च विष्टुतित्रयमस्ति उद्यती, परिवर्त्तिनी, कुलायिनीति; तास्र तत्रैव स्फुटाः। विकृतियागेऽति-रात्रादावत्रैव एकविंशादि-स्तोमा विहिताः। बहिष्पवमाने आच आहत्यगाना-भावात् त्रिषु तृचेष्ववस्थिताभिर्नवभिर्ऋग्भिरेकविंशस्तोमपूरणाभावात् तत्पूरणाय चत्वारस्तृचा आगमयितव्याः, त्रिणवस्तोमपूरणाय षट् तृचाः, त्रयस्त्रिंशत्स्तोमपूरणाय चाष्टौ तृचाः। ऋचागमने च मानम्—"त्रीणि ह वै यज्ञस्योदराणि गायत्री"—इत्यादि ताण्ड्य-सप्तम-तृतीये द्रष्टव्यम्। आगन्तूनाञ्च तासामन्ते निवेशः। द्वादशाहे तु मध्ये एव निवेशः। तद्विचारश्च मीमांसाधिकरणमालायाः पञ्चम-तृतीयस्य चतुर्थे द्रष्टव्यः। प्राकृतानां बहिष्पवमानगतानां त्रयाणां तृचानां स्तोत्रियोऽनुरूपः पर्यासश्चेति यथा क्रमं त्रीणि नामानि। अत्र मानम् ताण्ड्यैकादशषष्ठे "स्तोत्रि-यानुरूपौ तृचौ भवतः"—इत्यादि। गवामयनादिषु सत्त्रेषु पूर्वं चतुर्भिरात्रिकैः चतुर्विंशत्यहानि भवन्ति तत एकेन पृष्ठ्य-षड़हेन मासः पूर्य्यते, तत्र प्रथमाहः त्रिवृत्स्तोमसाध्यः अतोऽयं स्तोमः पृष्ठ्य इत्यप्युच्यते। किञ्चैदमेकषष्ठ्यधिकत्रिशत-दिनसाध्येषु सत्त्रेषु—पञ्चविंशदिने, पञ्चपञ्चाशद्दिने, पञ्चाशीतिदिने, पञ्चदशाधिक-शततमे दिने, पञ्चचत्वारिंशदधिकशतदिने, कमसप्तत्यधिकशतदिने, नवत्यधिक-शतदिने. एकादशाधिकद्विशतदिने, एकचत्वारिंशदधिकद्विशतदिने, एकसप्तत्य-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वितीयखण्डे,

प्रथमतृचे—प्रथमा।

२ ३ १ २ ३ १ २ ३ २ ३ १ २

अग्न आयाहि वीतये गृणानो हव्यदातये।

१ २र ३ १ २

नि होता सत्सि बर्हिषि॥ १ *॥

हे "अग्ने" अङ्गनादिगुणविशिष्ट! त्वम् "आयाहि" अस्मद् यज्ञं प्रत्यागच्छ। किमर्थम्? "वीतये" हविषां चरुपुरोडाशादीनां भक्षणाय। कीदृशः सन्? "गृणानः" अस्माभिः स्तूयमानः [व्यत्ययेन: कर्मणि कर्तृप्रत्ययः]। पुनश्च किमर्थम्? "हव्यदा-तये" देवेभ्यो हविःप्रदानाय। आगत्य च "होता" देवाना माह्वाता सन् "बर्हिषि" आस्तीर्णे दर्भे "निषत्सि" निषीद [सदेः छान्दसः शपो लुक्॥ १॥

अथ द्वितीया।

१ २ २ १ २ ३ १ २

तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि।

३ १ २

बृहच्छोचा यविष्ठ्य॥ २ †॥

---

षिकद्विशतदिने, एकाधिकविंशततमे च दिने विनियुज्यते—इति दिक् विस्तरस्तु, ताण्ड्ये चतुर्थप्रपाठकादिके।

* छ० आ० १, १, १, २ (१भा० ८४ पृ०) = ऋ० वे० ४, ५, २९, ४।

† य० वे० ३, ३ = ऋ० वे० ४, ५, २३, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "अङ्गिरः" अङ्गनादिगुणयुक्त! अङ्गिरसः पुत्र वा अग्ने! "तं" पूर्वोक्तगुणं "त्वा" त्वां "समिद्भिः" समिन्धन-हेतुभिः दारुभिः "घृतेन" आज्येन च "वर्द्धयामसि" वर्द्धयामः। अतो हे "यविष्ठ्य" युवतमाग्ने! * "बृहत्" महत् अत्यन्तं "शोच" दीप्यस्व ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ २ ३ १ २
सनःपृथुश्रवाय्यमच्छादेवविवाससि।

२ १ २ ३ १ २
बृहदग्नेसुवीर्यम् ॥ ३ † ॥ ४ ‡

हे "देव" द्योतमानाग्ने! स पूर्वोक्तगुणस्त्वं "पृथु" विस्तीर्णं "श्रवाय्यं" श्रवणीयं प्रशस्यं "बृहत्" महत् "सुवीर्य्यं" शोभन-वीर्य्योपेतं धनं "नः" अस्मान्¶ "अच्छ" § "विवाससि" अभि-गमय+। अत्र वाजसनेयकम्—"अच्छादेवविवाससीति तन्नो ग्निमयेत्येवैतदाहेति ॥ ३ ॥ ४

* 'यविष्ठ्य. अतिशयेन बलवान्'—इति वि०।

† ऋ० वे० ४, ५, २३, २।

‡ इदमाग्नेय साम्यम्।

¶ 'नः अस्मभ्यम्'—इति वि०।

§ 'अच्छ आप्नुम्'—इति वि०।

+ 'विवाससि . . . दीप्तिं करोषि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वितीयटचे—प्रथमा।

१ २ ३ १ २र
आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम्।
२ ३ १ २
मध्वारजा᳘ꣳसिसुक्रतू॥ १ *॥

"सुक्रतू" शोभनकर्माणौ, हे "मित्रावरुणौ"! "नः" अस्माकम् "गव्यूतिं" गवां मार्गं गोनिवासस्थानं "घृतैः" क्षरणसाधनैः पयोभिरुदकैः "आ उक्षतं" समन्तात् सिञ्चतम्। अस्मभ्यं दोग्ध्रीः गाः प्रयच्छत मित्यर्थः। किञ्च "मध्वा" मधुरेण सुरसेन "रजांसि" पारलौकिकानि अस्मदावासस्थानानि "सिञ्चतम्"॥ १॥

अथ द्वितीया।

२ १ २ ३ १ ३ ११ २र
उरुश᳘ꣳसानमोवृधामह्नादक्षस्यराजथः।
३ २
द्राघिष्ठाभिःशुचिव्रता॥ २ †॥

"शुचिव्रता" परिशुद्धकर्माणौ‡ हे मित्रावरुणौ! "उरुशंसा" उरुभिः बहुभिः¶ शंसनीयौ। यद्वात्र बृहच्छंसः शस्त्रं ययोस्तौ।

---

* ऋ० व्या० ३, २, ३, ७ (१भा० ४५९ पृ०) = ऋ० वे० ३, ४, ११, ५।

† ऋ० वे० ३, ४, ११, ६।

‡ 'हे शुचिव्रतौ शुचिर्यस्या मर्थं क्रियमाणं कर्म भवति तौ शुचिव्रतौ सत्यतमौ—इति वि०।

¶ "उरु"—इति बहुनामसुपाठः नैघण्टुकम् ३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"नमोवृधा" नमसा हविर्लक्षणेनान्नेन स्तोत्रेण वा वर्द्धमानौ* । "द्राघिष्ठाभिः" अत्यन्तदीर्घस्तुतिलक्षणाभिर्युक्तो युवां "दक्षस्य" दक्षते समर्थो भवत्यनेनेति दक्षं धनं बलं वा तस्य† "मह्ना" महत्वेन "राजथः" ईशाथे‡ ॥ २ ॥

अथ तृतीया ।

२   १ २ ३ १ २   ३ १ २ ३ १ २
गृणानाजमदग्निनायोनावृतस्यसीदतम् ।
२   १     २र
पातꣳसोमवृतावृधा ॥ ३ ¶ ॥ ५ §

हे मित्रावरुणौ ! "जमदग्निना" एतन्नामकेन महर्षिणा यद्वा जमदग्निना प्रज्वलिताग्निना विश्वामित्रेण "गृणाना" स्तूयमानौ युवां "ऋतस्य" यज्ञस्य "योनौ" देवयजनाख्ये देशे "सीदतं" उपविशतं "ऋतावृधा" ऋतस्य कर्म्मफलस्य वर्द्धयितारौ युवां + "सोमं" "पातम्" अस्माभिरभिषुतम् सोमं पिबतम् ॥ ३ ॥ ५

---

* 'नमस्कारैर्वृद्धौ'—इति वि० ।

† 'दक्षस्य ऋषेः अथवा दक्षो यजमान उच्यते तस्य यजमानस्य बलेन दीप्यमानेन—इति वि० । दक्ष इति बलनामसु तथोदशं नैघण्टुकम् २, ९ ।

‡ 'राजथः दीप्यथः'—इति वि० ।

¶ ऋ० वे ३, ४, ११, ७ ।  § इदं मैत्रावरुण माज्यम् ।

+ 'ऋतावृधौ यज्ञेन वर्धितौ'—इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तृतीये तृचे—प्रथमा।

१ २ ३२उ ३१२ ३ २ ३ १२ ३ २
आयाहिसुषुमाहितइन्द्रसोमम्पिबाइमम्।
२उ ३ १ २ ३ २ २
एदम्बर्हिःसदोमम॥ १ *॥

हे "इन्द्र" ! त्वम् "आ याहि" अस्मद्यज्ञं प्रत्यागच्छ, वयं "ते" त्वदर्थं "सुषुमा हि" सोम मभिषुतवन्तः खलु तम् "इमम्" अभिषुतं सोमं त्वं "पिब" त्वदर्थं "मम" यमिदं "बर्हिः" वेद्या मास्तीर्णं दर्भम् "आ सदः" आसीद अभि निषीद॥ १॥

अथ द्वितीया।

१ २ ३ २३ ३ २३ १ २ ३ १ २
आत्वाब्रह्मयुजाहरीवहतामिन्द्रकेशिना।
२ ३ १ ३
उपब्रह्माणिनःशृणु॥ २ †॥

हे "इन्द्र" ! "ब्रह्मयुजा" ब्रह्मणा मन्त्रेण युज्यमानौ "केशिना" केशिनौ केशवन्तौ "हरी" हरणशीलौ वा अश्वौ "त्वा" त्वाम् "अवहताम्" अभि प्रापयताम्। त्वं चास्मद्यज्ञ मुपेत्य "नः" अस्माकं "ब्रह्माणि" स्तोत्राणि "शृणु" सम्यक् चित्ते धारय॥ २॥

---

* छ० आ० २, २, ५, ७ (१ भा० ४१७ पृ०) = ऋ० वे० ६, १, २२, १।
† ऋ० वे० ६, १, २२, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

३ १ २   ३ २ ३ १   २ ३ २ २   ३ १ २

**ब्रह्माणस्त्वायुजावयꣳसोमपामिन्द्रसोमिनः।**

३ १ २

**सुतावन्तोहवामहे ॥ ३ * ॥ ६ †**

हे "इन्द्र" "ब्रह्माणः" ब्राह्मणा वयं त्वां "त्वायुजा" योग्येन स्तोत्रेण "हवामहे" आह्वयामहे। कथम्भूतम्? "सोमपां" सोमस्य पातारम्। ईदृशा वयं "सोमिनः" सोमयुक्ताः "सुतावन्तः" अभिषुतैः सोमैरुपेताः॥ "ब्रह्माणस्त्वायुजावयं"-"ब्रह्माणस्त्वा-वयं युजा"—इति पाठौ ॥ ३ ॥ ६

चतुर्थे तृचे—प्रथमा।

१ २   ३ १ २   ३ २ ३ २उ   १ २

**इन्द्राग्नीआगतꣳसुतङ्गीर्भिर्नभोवरेण्यम्।**

३ १ २   ३ २ ३ २

**अस्यपातन्धियेषिता ॥ १ ‡ ॥**

इन्द्रश्चाग्निश्च "इन्द्राग्नी" ¶ देवौ § "सुतम्" अभिषवा-

---

* ऋ० वे० ६, १, २२, ३। † इद मैन्द्र माज्यम्।

‡ य० वे० ७, ३१ = ऋ० व० ३, १, ११, १। ऋ० "विश्वामित्रो गाथिनः"—इति ऋषि-नै०। दे० 'इन्द्राग्नी ऐन्द्राग्नम्'—इति देव-नै०। छ० गायत्री। एव-मेवाप्युत्तरत्र द्वयोः।

¶ छ० आ० ३, २, ४, ९, = अत्र तु १, १, ७, १ = १, १, ७, २ = २, १, ८ १ = १, २, ८, २ = १, १, ९, १ = ३, २, १०, १—इति सप्तसु ऋचु श्रूयते 'इन्द्राग्नी'।

§ "अथास्य संस्तविका देवाः—अग्निः सोमो वरुणः पूषा बृहस्पति र्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णु र्वायुः"—इति निघ० द० १, १०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दिभिः संस्कारैः संस्कृतम् अतएव "वरेण्यं" वरणीयं सम्भजनीय मिमं सोमं प्रति "गीर्भिः" अस्मदीयाभिर्वाग्भिराहुतौ सन्तौ "नभः" नभसः स्वर्गाख्यात् स्थानात् "आगतम्" आगच्छतम् । आगत्य च "धिया" अस्माभिः क्रियमाणेन कर्मणा "इषिता" इषितौ प्रेरितौ युवाम् "अस्य" इमं सोमं "पातं" पिबतं । यद्वा "धिया" अस्मदीयया बुद्ध्या इषितौ प्राप्तौ * अस्मद्भक्त्या प्रेरितौ युवा मिमं सोमं पिबतम् ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २र ३ १ २ १ ३ १ २
इन्द्राग्नीजरितुःसचायज्ञोजिगातिचेतनः ।
३ १ २ ३ २ ३ २
अयापातमिमꣳसुतम् ॥ २† ॥

हे "इन्द्राग्नी" "जरितु" स्तोतुः‡ "सचा" स्वर्गादिलक्षणप्राप्तौ सहायभूतौ "यज्ञः" ज्योतिष्टोमादि-यज्ञ-साधनभूतश्चेतनः इन्द्रियाणां चेतयिता आप्यायनकारी सन्नसौ सोमः "जिगाति" युवा मभिगच्छति¶। "अया" अस्मदीयया स्तुतिलक्षणया अनया वाचा आहुतौ सन्तौ युवां "सुतम्" अभिषवादि-संस्कारोपेतम् "इमं" "पातं" पिबतम् ॥ २ ॥

---

* "इषता इषु इच्छायाम् इच्छन्त्या"—इति वि० ।

† ऋ० वे० ३, १, ११, २ ।     ‡ 'जरितुः स्तोतुः उद्गातुः'—इति वि० ।

¶ 'जिगाति गायति चेतनः लुप्तोपमान मिदं चेतन इव'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ ३ २ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।
१ २र ३ १ २
ता सोमस्येह तृम्पताम् ॥ ३ * ॥ ६ †

"यज्ञस्य" यज्ञसाधनभूतस्य सोमस्य "जूत्या" जूतिः प्रेरणं सोमस्तावद्यजमानं प्रेरयति । साधन मुपलभ्य तत् साध्ये क्रतौ यजमानः प्रवर्त्तत इति हि तस्य प्रेरकत्वम् । तया प्रेरणरूपतया जूत्या ‡ प्रेरितोऽहं स्तोता "कविच्छदा" कवीनां स्तोतृणा मुचितफल-प्रदानेनोपच्छन्दकौ इन्द्र मग्निं च युवा "वृणे" सम्भजेत आगतौ च ताविन्द्राग्नी "इह" अस्मदीये अस्मिन् कर्मणि "सोमस्य" सोमेन सोमयागेन "तृम्पतां" तृप्यताम् ॥ ३ ॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य द्वितीयः खण्डः ¶ ॥ २ ॥

---

* ऋ० वे० ३, १, ११, ३ ।

† इद मैन्द्राग्न माज्यम् । '[illegible]' सवमं समाप्तम्' —इति वि०

‡ 'जूत्या अभिवृद्ध्या निमित्तभूतया'—इति वि० ।

¶ "तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते"—इति मी० द० जै० अ० ९ अध्या० ४ पा० ३ अधि० । 'यदाजिमीयुस्तदाज्याना माज्यत्वम्'—इति चैतन्निर्वचनम् ता० ब्रा० ७, २ । एष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति; तद्विधायकं ब्राह्मणं ताण्डम, 'पञ्चभ्यो हिङ्करोति'—इत्यादि ( २, ४-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तृतीयखण्डस्य,

प्रथमतृचे—प्रथमा ।

२ १ २ ३ ११ २र ३ ११ २र
उच्चातेजातमन्धसोदिविसद्भूम्याददे ।

३१र ३ २ ३१ २
उग्रꣳशर्ममहिश्रवः ॥ १ * ॥

हे सोम! "ते" तव सम्बन्धिनः "अन्धसः" रसस्य "उच्चा" उपरि "जातं" जन्म अपिच "दिवि" द्युलोके "सत्" तव सम्बन्धि "उग्रम्" उद्गूर्णं "शर्म" सुखं "महि" महत्। "श्रवः" अन्नं "भूमि" भूमिष्ठैः यजमानैः "आ ददे" आदीयते ॥ दिविसद्"-दिविषद्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२३१२ ३१२ ३१२ ३१२
सनइन्द्राययज्यवेवरुणायमरुद्भ्यः ।

---

५-६) तत्रैवैतद् विष्टुतिचयञ्च परिस्फुटम्। सोमोऽयं द्वितीय पृष्ठत्र इत्यप्युच्यते किञ्च सत्रेषु षड्विंशतितमे दिने, षट्पञ्चाशत्तमे दिने, षडशीतिदिने, षोडशाधिकशतदिने, षट्चत्वारिंशदधिकशतदिने, सप्तत्यधिकशतदिने, ऊननवत्यधिकशतदिने, दशाधिक-द्विशतदिने, चत्वारिंशदधिकशतदिने, सप्तत्यधिकद्विशतदिने, त्रिशततमे च दिने विनियुज्यते। विस्तरस्तु ताण्ड्य-चतुर्थप्रपाटकादिके।

* छ० आ० ५, २, ४, १ (२ भा० २ पृ०) = ऋ० वे० ७, १, १९, ५। ऋ० 'अमहीयुः आङ्गिरसः'—इति ऋषिनै०। दे० 'पवमानः सोमः'—इति देव-नै०। छ० गायत्री। एवमेवात्रोत्तरच द्वयोः॥ इदानीं माध्यन्दिनः पवमानः। गायत्री बृहती त्रिष्टुबिति छन्दांसि। पुष्कलोऽग्निर्वामहीयवोऽग्निरुत्तरिन्द्रीयुधाजीवउशनाःकाव्यः इति आर्षाणि। सोमः स्तोत्रदेवता साम-दैवता विस्तरभयान्नोच्यन्ते'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ११ २र
वरिवोवित्परिस्रव ॥ २ * ॥

हे सोम "वरिवोवित्" धनस्य लम्भकः पवमानः † "नः" अस्माकं ‡ "यज्यवे" यष्टव्याय ¶ "इन्द्राय" "वरुणाय" च "मरुद्भ्यः" च "परि स्रव" धारया चर § ॥ २ ॥

अथ तृतीया।

३१ २र ३२उ ३ २ ३१ २
एनाविश्वान्यर्यआद्युम्नानिमानुषाणाम्।
१ २
सिषासन्तोवनामहे ॥ ३ ** ॥ ८ ††

"मानुषाणां" मनुष्याणां लब्धव्यानि "एना" एनानि "विश्वा" विश्वानि सर्वाणि "द्युम्नानि" यज्ञसाधनानि धनानि ‡‡ हे सोम! त्वत्प्रसादात् "आ" आभिमुख्येन "अर्य्यः" ¶¶ अभि-

---

* छ० आ० आर० १, ७ ( २ भा० २५४ पृ० ) = ऋ० वे० ७, १, २०, २।

† 'वरिवः वरिष्ठः। वित् भक्षणीयः'—इति वि०।

‡ 'नः अस्मभ्यम्'—इति वि०।

¶ 'यज्यवे यजमानार्थं—इति वि०।

§ 'परिस्रव परि समन्तात् दशापवित्रात् स्रव'—इति वि०।

** छ० आ० आर० १, ८ ( २ भा० २५६ पृ० ) = ऋ० वे० ७, १, २०, १।

†† इदं माध्यन्दिनपवमान साम्यम्।

‡‡ 'द्युम्नानि अन्नानि'—इति वि०।

¶¶ 'अर्यः यजमानः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गच्छन्तः वयं "सिषासन्तः" सम्भुक्त मिच्छन्तश्च * "वनामहे" त्वां सम्भजामहे † ॥ ३ ॥ ८

५ र २ ४र ५ २ १
॥ आमहीयवम् ॥ उच्चाता२इजातमन्धसाः। दिवा
१ १ २ १ २ १
इसाऽ१इ़ू२। मिया२३ददाइ। उग्र(ं)शर्मा। महा२३
२ ५ २ ४र ५ १ २ २
इश्रवाउ। वा३ ॥(१) सनआ२इन्द्रायजयवाइ। वरुणा
१ २ २ २र १
ऽ१या२। मरु२३द्भियाः। वरिवोवाइत्। परा२३इश्च
२ ५रर २ ४र ५ २ १ २
वाउ। वा३ ॥(२) एनावा२इस्वानिअर्यआ। द्युम्नाना ऽ१इ
२ १ २र २ १ २
मा२। नुषा२३णाम्। सिषासन्ताः। वना२३महाउ।
२र १ १ १ १
वा३। स्तौषे२३४५(३) ॥ १ ‡ ॥ [१]

४ ३ र ४ २ ३ ५
॥ क्षुल्लकवैष्टम्भम् ॥ उच्चा ऽ५ते। जा३तमन्धसाः।
१ २ र १ २ १ २ २ १
दायिवीसद्भू। मिया दा१दे२३। होवा३हायि। उग्रा(ं)

* 'सिषासन्तः साधयन्तः'—इति वि०।

† 'वनामहे याचयामः'—इति वि०।

‡ ऊ० गा० १प्र० १ख० १सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ग्मा१र्म्मा२३ । होवा३हायि । मह्वि । आ२वा२३४औ
होवा ॥(१) सनाऽ५इ । द्रा३ययज्ज्यवायि । वारुणाय । म
रुद्भा१या२३ः । होवा३हायि । वरायिवो१वी२३त् ।
होवा३हायि । परि । स्रा२वा२३४औहोवा ॥(२) एनाऽ५
वि । श्वा३निअर्य्यआ । द्युम्नानिमा । नृषा१णा२३म् ।
होवा३हायि । सिषासा१न्ता२३ः । होवा३हायि । वना ।
मा२हा२३४औहोवा । दी२३४आः(३) ॥ १३ * ॥ [२]

॥ आजिगम् ॥ उच्चातेजा । तमान्धासाः । दि
विसद्भू । माया१दा२३दायि । उग्राँशार्म्मा । मह्विआ
२३वा२३४३ः ॥(१) सनाआयिन्द्रा । ययाज्यावायि । वरुणा
य । मारुद्भा२३याः । वरायिवोवीत् । परिस्रा२३वा३४
३ ॥(२) एनावायिश्वा । निआर्य्याआ । द्युम्नानिमा । नृ

* ऊ० गा० २प्र० १ख० १२सा० ।




CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



षार२३णाम् । सिषासान्ताः । वनामार२३हा३४३यि ।
ओ२३४५ई । डा (३) ॥ ८ * ॥ [३]

॥ आभीकम् ॥ ऊ२३४च्चातेजाप्र । तमौहोन्धा
साः । दिविसङ्गूमियार्दा३दे । उग्र९ँशा२३४र्म्मा । मा
हा३उवा३४३ । आ३४५वो६हायि ॥(१) सा२३४नइन्द्राप्र ।
ययौहोज्यावायि । वरुणायमरु१ङ्गा३याः । वरिवो२३४
वीत् । पारा४उवा३४३ । स्वा३४५वो६हायि ॥(२) आ२३४
यिनाविश्वाप्र । नियौहोर्य्याआ । द्युम्नानिमानू१षा३णा
म् । सिषासा२३४न्ताः । वाना३उवा३४२ । मा३४५हो
६हायि(३) ॥ १० † ॥ [४]

॥ गायत्रीवैरूपम् ॥ उच्चाते२३४जा । तमान्धा३सा३ः ।
दिवार्यिसा२३४ङ्गू । माया१दादा२यि । उग्रार३म् ।

* ऊ० गा० ६प्र० १ख० ९सा० ।
† ऊ० गा० ६प्र० १ख० १०सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५र र २ १ २ ३१११११ २ १
शर्म्मा३४औहोवा। मद्दिश्रवार३४५ः॥(१) सनाश्रा२३४यि
५ २१ २ १ १ १ ७
न्द्रा। ययाज्या३वा३यि। वरूरणा२३४या। मारुद्भा
१ र २ ५र र ११२ ३११
या२ः। वरा२३यि। वोवा३४औहोवा। परिस्रवा२३
११ २र१र ५ २ १ २ २ १
४५॥(२) एनावा२३४यिश्वा। निश्रार्य्या३श्रा३। द्युम्ना२
२ ५ १ २ १ २ २
ना२३४यिमा। नृषा१णा२म्। सिषा२३। सन्ता३४
५र र ११र२३ ११११
औहोवा। वनामहो२३४५यि(३)॥ १२ *॥ [५]

२ २ र र
॥ सत्रासाहीयम्॥ उच्चा३४। तेजातमन्धसः।
५ ५ १ र र १ १ १
ओ६वा। दिविसद्भूमियादा२दायि। ऊ२ग्राम्। शा
२ १५ र२ ३र २ १ ५ ५
२३र्म्मा। महौ३हों। वाहा३४३यि। आ२३४वो६हा
२ २ र र ५ ५ १ र
यि॥(१) सना३४ः। इन्द्राययज्यवे। ओ६वा। वरुणाय
१ १ २ १५ २र
मरुद्भा२याः। वा२रायि। वो२३वीत्। परौ३हो।
३र २ १ ५ ५ ३र२ र
वाहा३४३यि। हा२३४वो६हायि॥(२) एना३४। विश्वान्य

* ऊ० गा० ७प्र० १ख० १२सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र ५ ५ १ र र १ १
र्य्यंश्रा। श्रो६वा। द्यु म्नानिमानुषा२णाम्। सा२यिषा।

२ १ ऽ २र ३र२ १ ५
सा२३न्ताः। वनौ३द्दो। वाहा२३४५यि। मा२३४द्दो६

५
द्दायि(३) ॥ १२ * ॥ [६]

२ र र र २ ४ ३
॥ स्वारसौपर्णम्॥ उच्चातेजातमन्धा३सा:। दिवि

४र ५र १ ३ ५ १२ २ १
सद्भूमिया। हुम्। दा२३४दायि। उग्रा३उवा। शर्म।

२१ ५ ४ ५ २ २ २
मद्दो२३४वा। श्रा५वो६हायि॥(१) सनइन्द्राययज्या३वा

३ ४ ५र र १ ३ ५ १र
यि। वरुणायमरु। हुम्। द्भा२३४या:। वारा३उ

र र १ २१ ५ ४ ५ २रर
वा। वोवित्। परो२३४वा। स्वा५वो६हायि॥(२) एना

र २ ४ ३र ४ ५रर १ ३ ५
विश्वान्यर्य्यो३श्रा। द्यु म्नानिमानू। हुम्। षा२३४णाम्।

१ २ २ १र २१ ५ ४ ५
सायिषा३उवा। सन्ताः। वनो२३४वा। मा५हो६हा

यि(३)॥ १० † ॥ [७]

१ २ र१र २१ २ १
॥ शाक्करवर्णम्॥ उच्चा। तेजातमन्धसाः। दिवि

---

* ऊ० गा० ८प्र० २ख० १२सा०।

† ऊ० गा० १०प्र० १ख० १०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सत्। भूमियार२। ददा३१उवा२३। ऊ३४पा। उग्र
ऽग्माऽ२३र्मा। महिश्रवा३१उवा२३॥(१) सानाः। इन्द्राय
यज्व्यवायि। वरुणा। यमरू२। द्भियाइ१उवा२३।
ऊ३४पा। वरिवो२३वीत्। परिस्रवा३१उवा२३॥(२) आ
यिना। विश्वान्यर्यआ। द्युम्नानि। मानू२। पाणा३
माउवा२३। ऊ३४पा। सिषासा२३न्ताः। वनामद्वा३१
उवा२३। ऊ३२३४णा(३)॥ ११ *॥ [८]

॥ जराबोधीयम्॥ उच्चातेजोवा। तामन्धसाः।
दिवायिसा२३द्भू। मियादादायि। उग्राऽग्मा१र्मा२३
मा। हि। श्रवो३४५ई। डा॥(१) सनइन्द्रोवा। याय
ज्यवायि। वरुणा२३या। मरुद्भ्यायाः। वरायिवो१वी
२३त्या। रि। स्रवो३४५ई। डा॥(२) एनाविश्वोवा। ना

* ऊ० गा० १०प्र० १ख० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ २ १ २
अर्य्य आ। द्युम्नाना२३यिमा। नुषाणाम्। सिषासा
४ ५र ३ २
१न्तार३वा। ना। महो३४५ई। डा(३)॥ १४*॥ [९]

२र र रर
॥ ऋषभः पावमानम्॥ हाहाउद्घातेजा। हा३।
२ १ २ ५ २१ र २ २
हा३यि। तामार२न्धा२३४साः। दिविसद्भूमियाश्दा२
२ ३ ५ १ २ ४ ५ ४
दे। उग्रं एंभा२३४म्मा। ओमो३। मह्वोवा। आ५
५ २र र २ १
वो६हायि॥(१) हाहाउसनइन्द्रा। हा३। हा३यि। या
३ ५ १ र २ २ २ ३
या२ज्या२३४वायिं। वरुणायमरु१द्भा३याः। वरिवो
५ १ २ ४ ५ ४ ५ २र
२३४वीत्। ओमो३। परोवा। स्वा५वो६हायि॥(२)हा
र रर २ १ ३ ५
हावेनाविश्वा। हा३। हा३यि। नाआर२र्य्या२३४आ।
१ र र २ २ २ २ ३ ५ १ २
द्युम्नानिमानू१षा३णाम्। सिषासा२३४न्ताः। ओमो३।
४ ५ ४ ५
वनोवा। मा५हो६हायि(३)॥ १ †॥ [१०]

---

* ऊ० गा० ११प्र० १ख० १४सा०।

† ऊ० गा० १२प्र० १ख० १मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ गौषूक्तम् ॥ उच्चातेजातमौ। हौहोवाहायि। धसाः। दिविसद्भूमियौ२। ऊवायि। ऊवा२यि। दादा२यि। उग्रꣳशर्ममहौ२। ऊवायि। ऊवा२यि। आवा२३ः। हो२वा२३४औहोवा ॥(१) सनइन्द्राय यौ। हौहोवाहायि। ज्यवायि। वरुणायमरौ२। ऊवायि। ऊवा२यि। दभाया२ः। वरिवोवित्परौ२। ऊवाहि। ऊवा२यि। स्रावा२३। हो२वा२३४औहोवा ॥(२) एनाविश्वानियौ। हौहोवाहा। र्यआ। द्युम्नानिमानुषौ२। ऊवायि। हुवा२यि। षाणा२म्। सिषासन्तोवनौ२। हुवायि। हुवा२यि। माहा२३यि। हो२वा२३४औहोवा। अग्निराहुता२३४५ः(३) ॥ २*॥ [११]

॥ स्वारसैन्धुक्षितम् ॥ उच्चातेजातमन्धासाः। दा

* ऊ० गा० १२प्र० १ख० २मा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यिविसद्भू। मियादादौ। होवा३हायि। ऊग्रा२ए
शाम्र्मा२३। महो२३४वा। आ५वो६हायि॥(१) सनइन्द्रा
ययज्यावायि। वारुणाय। मरुद्भायौ। होवा३हा
यि। वारा२यिवोवी२३त्। परो२३४वा। स्रा५वो६हा
यि॥(२) एनाविश्वानिअर्य्याआ। द्यूम्नानिमा। नूषाणौ।
होवा३हायि। सायिषा२सान्ता२३:। वनो२३४वा। मा
५हो६हायि(३)॥७*॥ [१२]

॥ ऐडसौपर्णम्॥ उच्चातेजोवा। तामन्धा२३४
सा:। दिवायिसद्भू। मिया२दा२३४दायि। ऊ२
ग्राम्। शा२३र्म्मा। माहिश्रवा। औ३होवा॥(१)सन
इन्द्रौवा। यायज्या२३४वायि। वरुणाया। मरु२द्भा
२३४या:। वा२रायि। वो२३वीत्। पारिस्रवा। औ

* ऊ० गा० १९प्र० २ख० ७मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५   २र र   १ २   १ २ ३   ५   २ १
३होवा ॥(२) एनाविश्वोवा । नाअर्य्या२३४आ । द्युम्ना
२ १   ३ ५   १   ०
निमा । नूरेषा२३४णाम् । सा२यिषा । सा२३न्ताः ।
१ २र १   २ ४ ५   ४
वानामद्धा । औ३होवा । होऽ५ई । डा(३) ॥ १७* ॥ [१३]
२र १र   १
॥ सुरूपोत्तरम् ॥ उच्चातेजौहो२ । इया । तम
१   १   १   २र १
न्धासा२ः । दिविसद्भौहो२ । इया । मियादादा२
१   १   २ १   २
यि । उग्रᳫंशर्म्मौहो२ । इया । महिश्रा२३वा३४३ः ॥(१)
२ १   १   २ १   १र
सनइन्द्रौहो२ । इया । ययज्यावा२यि । वरुणायौहो
१   २ १   १र   १
२ । इया । मरुद्भाया२ः । वरिवोवौहो२ । इया ।
२ १   २   १रर १   १   २ १
परिस्रा२३वा३४३ ॥(२) एनाविश्वौहो२ । इया । निअर्या
२ १   १   २१
आ२ । द्युम्नानिमौहो२ । इया । नृषाणा२म् । सि
१ १   १   २१र   २   १
षासन्तौहो२ । इया । वनामा२३हा३४३यि । ओ२३
४५ई । डा (३) ॥ ३† ॥ [१४]

---

* ऊ० गा० १३प्र० १ख० १०सा० ।

† ऊ० गा० १५प्र० १ख० ३सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र र १
॥ अद्वारद्वत् ॥ हाऊत्वातेजा । तमा२न्धासा२ ।
१ र २ १ १ १
दिविसद्भूमिया२दादा२यि । उग्रा२ᳫ्शार्म्मा२ । महि ।
३ ५र र २५ १
श्रा२वा२३४औहोवा ॥(१) हाउसनइन्द्रा । यया२ज्यावा ।
१ र १ १
२ये । वरुणायमरु२द्भाया२ः । वरा२यिवोवी२त् ।
४ ५र र २र र र
परि । स्रा२वा२३४औहोवा ॥(२) हावेनाविश्वा । नित्रा
१ १ र र १ १
२र्य्याश्रा२ । द्युम्नानिमानू२षाणा२म् । सिषा२सा
१ ३ ५र र २ १ २ र
न्ता२ः । वना । मा२हा२३४औहोवा । अस्मभ्यञ्जातु
१२ ३ ११ १
वित्तमा२३४५म (३) ॥ ४ * ॥ [१५]

२र र १ २
॥ इडानाᳫ्संचारः ॥ औहोइ्थिदुवा३होयि । उ
र र ४ २१ ५ २ ४ २ ३ ५
त्वातेजा३ता३मन्धसः । दिविसद्भूमी३यांददायि ।
३ २ १ ५ २ १ १ १ १
उग्राᳫ्शा२३४र्म्मा । महिश्रवः । इडा२३ ॥(१) सनइन्द्रा३
४ २ १ ५ २ र ४ २१ ५ २१ ३
या३यज्यवायि । वरुणाया३मा३रुद्भियः । वरायिवोर३

* ऊ० गा० १५प्र० १ख० ४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४वीत्। परिस्रव। इडा२३॥(२) एनाविश्वा३नी३अर्य्य३आ।
द्यु,म्नानिमा३नू३षाणाम्। औहोयिद्दुवा३होयि। सिषा
सा२३४न्ताः। वनामहे। इडा२३भा३। एहीडा।
होऽ५ई। डा(३)॥ ५ *॥ [१६]

॥ आप्लुभार्गवम्॥ उच्चाते। जातमन्धा३साः।
दायिविसद्भू३। मार्या२दा२३४दायि। उग्रा१आ१
म्मा२। महा३यि। आ२३४वौ६हायि॥(१) सनइ। द्रा
ययज्या३षायि। वारुणाया३। मारु२द्भा२३४याः।
वरायिवो१वी२त्। परा३यि। सा२३४वो६हायि॥(२) ए
नाविश्वानि। अर्य्या३आ। द्यूम्नानी३। मानू२षा२३
४णाम्। सिषासा१न्ता२ः। वना३। मा२३४वो६हा
यि(३)॥ ११ †॥ [१७]

* ऊ० गा० १५प्र० १ख० ५गा०।

† ऊ० गा० १९प्र० १ख० ११गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र रर २ १
॥ सौमित्रम् ॥ उच्चातेजातमन्धसा३ए । दिविस
२र २ १ २
द्भूमि । आ२१२३ । ददा३४३यि । ऊर३ग्राम् । श
१ ४ ५ ४ ५ २ र
र्म२ओ२३ । महोवा । आ५वो६हायि ॥(१) सनइन्द्राय
२ १ २र २
यज्यवा३ए । वरुणायम । रू२१२३ । द्भिया३४३ः ।
१ २ र १ ४ ५ ४ ५
वार३रायि । वोवा२ओ२३ । परोवा । सा५वो६हा
२र र र २ १र १ २र
यि ॥(२) एनाविश्वान्यर्य्यआ३ए । द्युम्नानिमा । नू२१२३ ।
र २ १ १ १ ४
षाणा३४३म् । सा२३यिषा । सन्ता२ओ२३ । वनो
५ ४ ५
वा । मा५हो६हायि(३) ॥ ६ * ॥ [१८]

१ २ १ २ र र
॥ ऐटतम् ॥ उच्चा । एउच्चा । तेजातम् । आ
१ २ ५र र ३ ५ २ ३
३ । जा२मा२३४औहोवा । धा२३४साः । दिवायिसा
५ ३ २ १ ३ ५र र ३ ५
२३४द्भू । मिया३ । मा२या२३४औहोवा । दा२३४दे ।
२ ३ ५ ३ २ १ ३ ५र र
उग्रा२शा२३४र्म्मा । महा३यि । मा२हा२४४औहोवा ।

* ऊ० गा० २०प्र० १ख० ६मा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आ२३४वाः ॥(१) सनः। एमानाः। इन्द्राय। या। ३।
यार्व्या२३४औहोवा। ज्या२३४वे। वरुणा२३४या।
मरु३। मा२रु२३४औहोवा। दभी२३४याः। वरायिवो
२३४वीत्। परा३यि। पा२रा२३४औहोवा। स्वा२३४वा॥(२)
एना। एआयिना। विश्वानि। आ३। ना२आ२३४औहो
वा। र्या२३४आ। द्युम्ना२३४नी। मानू३। मा२नू२३४
औहोवा। षा२३४णाम्। सिषासा२३४न्ताः। वना३।
वा२ना२३४औहोवा। मा२३४हे(३)॥ ७*॥ [१९]

॥ धुरासाकमश्वम् ॥ उच्चातेजा३। हौ३हो३१।
तमन्धसा३ः। हौ३हो३१यि। दिविसद्भू३। हौ३हो
३१यि। मियाददा३यि। हौ३हो३१यि। उग्रꣳशर्म्मा
३। हौ३हो३१यि। महिश्रवा३ः। हौ३हो३१२३४५ई।

* ऊ० गा० २०प्र० १ख० ७मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



डा ॥(१) सनइन्द्रा३ । द्यौ३हो३१ । ययज्ज्वा३यि । द्यौ३द्यो३१यि । वरुणाया३ । हौ३हो३१यि । मरुद्भिया३ः । द्यौ३द्यो३१यि । वरिवोवी३त् । हौ३द्यो३१यि । परिखवा३ । द्यौ३द्यो३१२३४५ई । डा ॥(२) एनाविश्वा३ । द्यौ३द्यौ३१ । निअर्य्यआ३ । हौ३हो३१यि । द्युम्नानिमा३ । द्यौ३द्यो३१यि । नुषाणा३म् । द्यौ३हो३१यि । सिषासन्ता३ः । द्यौ३द्यो३१यि । वनामद्या३ । हौ३हो३१२३४५ई । डा(३) ॥ ८ * ॥ [२०]

॥ विलम्बसौपर्णम् ॥ उच्चातेजातमन्धसः । ईयइयाद्यायि । दिविसद्भूमिया । हा३द्या३यि । दा२३४द्यायि । ऊग्रा३उवा३ । शार्म्मा२३४औहोवा । महिश्रवा२३४५ः ॥(१) सनइन्द्रायययज्यवे । ईयइयाद्यायि । व

* ऊ० गा० १०प्र० १अ० ८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र५र र २ १ १ ५ १ १
ह्वणायमह्व । द्धा३हा३यि । द्भार२३४या । वारा३उ
२ १ ३ ५र र २ ३ १ १ १ १ २र१र
वा३ । वोरवार२३४औहोवा । परिस्रवा२३४५ ॥(२)एन।
२र १ १र १ २ १ १ ४ ३र ४ र ५र २
विश्वान्यर्य्यआ । ईयइयाद्धाहि । द्युम्नानिमानू । हा३
२ १ ५ १ १ २ १ ३
द्धा३यि । षा२३४णाम् । सायिषा३उवा३ । सारन्ता
५र र २र १ १ १११
२३४औहोवा । वनामहा२३४५यि(३) ॥ ९ * ॥ [२१]

२र १ २ १ ३२
॥ मार्गीयवाद्यम् ॥ उच्चौहोवा । तेजार । तमा
२ ५ १ १ र १ २ १
न्धार२३४सा: । दिविसद्भू । मियादा१दा२यि । उग्र
१ १ ३ ५ १ २
म् । द्धा । औ३होयि । प्रा२३४म्मा । मारद्धा२३४
५र र २ १ ११११ २र १ १ १
औहोवा । ए३ । अवा२३४५: ॥(१) सनौहोवा । आयि
३ २ ३ ५ १ २र १ २
न्द्रार । ययाज्या२३४वायि । वरुणाय । मरुद्भा१
१र २ २ १ ५ १
यार: । वरा । द्धा । औ३होयि । वोर२३४वीत् । पा

---

* ऊ० गा० १०प्र० १ख० ९सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ५र र २ १ १११११ २रर १ २
२रा२३४औहोवा। ए३। स्वा२३४५॥(२) एनौहोवा।
१ ३ १ ३ ५ १ र २ र १ २
वायिश्वा२। निश्वार्य्या२३४आ। द्युम्नानिमा। नूषा१
१ र १ २ ३ ५
णा२म्। क्षिषा। हा। औ३होयि। सा२३४न्ताः।
१ ३ ५र र २ १ ११११
वा२ना२३४औहोवा। ए३। महा२३४५यि(३)॥ १४*॥[२२]
३ र २र १ ४ ५
॥ ऐडकौत्सम ॥ सनाद्दीन्द्रा२३। ययज्ज्यवर्ड्डया।
१ २र १ २ १ २र १ २ १
वरुणायमरुद्भियः। वारुणाय। मरुद्भा२३याः। वा
२ २ १ २ २ १ २ १
रा३यिहायि। वोवो३ह्वायि। परिस्रा२३वा३४३। ओ
२३४५ई। डा(२)॥ ४ †॥ [२३]
२रर र २ १र २
॥ सौमित्रम् ॥ एनाविश्वान्यर्य्य आ३ए। द्युम्नानि
१र र २ १ २
मा। नू२१२३। षाणा३४३म्। सा२३यिषा। सन्ता
१ ४ ५ ४ ५
२ओ२३। वनोवा। मा५होई्हायि(३)॥ १९‡॥[२४] ८

---

* ऊ० गा० २०प्र० २ख० १४सा०।

† ऊ० गा० ०२प्र० १ख० ४सा०। द्वितीयस्या ऋचोगानमेतत्।

‡ ऊ० गा० १६प्र० १ख० १९सा०। तृतीयस्या ऋचोगानमेतत्।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वितीय-सूक्तरूपे प्रगाथे* प्रथमा—

२ १ २ ३१ २ ३ १ २र
पुनानःसोमधारयापोवसानोअर्षसि।
१ २ ३ १ १ २र ३ १ २ ३ १ २ ३१ २ ३ १ २
आरत्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः ॥ १† ॥

हे सोम। "पुनानः" पूयमानस्त्वम् "अपः" उदकानि वसतीवर्थ्याख्यानि "वसानः" आच्छादयन् "धारया" "अर्षसि" पवित्रं गच्छसि, ततो "रत्नधा" रत्नानां रमणीयानान्धनानां दाता च "ऋतस्य" सत्यभूतस्य यज्ञस्य "योनिं" स्थानम् "आसीदसि"। कीदृशस्त्वम्? "उत्सः" प्रस्यन्दनशीलः "देवः" द्योतमानः "हिरण्ययः" हिरण्मयः सुवर्णोत्पत्तिस्थान मित्यर्थः॥

"उत्सोदेवः"—"उत्सोदेव"—इति पाठौ ॥ १ ॥

---

* "प्रकर्षेण ग्रथनं यत्र स प्रगाथः। प्रकर्षो नाम आम्नाता दृक्पाठा दाधिक्यम्"—इति सी० द० अ० ९, ३, ९ अधि० १वर्णके माधवव्याख्यायाम्। एष च प्रगाथः—पादाभ्यास-पुरःसर मृगन्तरसम्पादनेनोपजायते। अत्र च "पुनःपदा"—इति श्रौतोक्ति लिङ्गम्। तथा च श्रूयते ताण्ड्ये तृतीये —"एषा वै प्रतिष्ठिता बृहती या पुनः पदा तद यत् पदं पुनरारभते तस्माद् वत्सो मातर मभिहिङ्करोति"—इति। अस्यार्थः—या बृहती पुनः पदा भवति, सैषा प्रतिष्ठिता स्थिरा भवति; यदं चतुर्थः पादः सोऽप्यृगन्तर-सम्पादनाय पुनः पठ्यते, ततः सा बृहती पुनः पदा; सेय मृङ्मातात, तस्याः पादो वत्सः; तथा सति यस्मादव चतुर्थं पाद मुद्गाता पुनरारभते तस्माद् वत्सो मातर मभि वीक्ष्य हि मिति शब्दं करोतीति।

† ऊ० आ० ६,१,३,१ (१भा० ७० पृ०)=ऋ० वे० ७, ४,१२, ४। ऋ० बृहती: दे० ऋ० पूर्ववत्।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

३ १र २र ३ १र २र ३ २ २ २ २ ३ २ ३ १ २
दुहानऊधर्द्दिव्यम्मधुप्रियम्प्रत्नꣳसधस्थमासदत्।

२ १ २ ३ १ २ ३ २र ३ १ २ ३ १ २ ३ २
आपृच्छ्यन्धरुणवाज्यर्षसिनृभिर्द्धौतोविचक्षणः॥ २* ॥९†

"मधु" मदकरं ‡ "प्रियं" प्रीणनकारि ¶ "दिव्यं" दिविभवम् "ऊधः" सोमवल्ली-लक्षणं "दुहानः" पवमानः § सोमो-देवः "प्रत्नं" पुरातनं "सधस्थं" सह तिष्ठन्त्यत्रेति सधस्थं स्थान मन्तरिक्षम् ‖ "आसदत्" आसीदति [सदेर्लुङि रूपं] तदनन्तरम् "आपृच्छ्यं" कर्मणा प्रष्टव्यं "धरुणं" कर्मणो धारयितारं यजमानं "वाजी" अन्नवान्** सन् हे सोम! त्वम् "अर्षसि" तस्मै अन्नं दातु मतिगच्छसि। कीदृशः? नृभिः कर्मनेतृभिर्ऋत्विग्भिः "धौतः" अदाभ्यग्रहे परिशोधितः

---

* ऋ० वे० ७, ५, १२, ५। † इदं माध्यन्दिनपवमानं द्वितीयम्।

‡ 'मधु स्वादु सोमाख्यम्'—इति वि०।

¶ 'प्रियं देवमनुष्याणाम्'—इति वि०।

§ 'दुहानः दुह्यमानः। ऊधः ऊधसः सकाशात् दशापवित्ररूपात्। अथवा ऊधउदकं यत्र क्रियते सोमस्य सकाशात् तद् दुह्यते'—इति वि०।

‖ 'सधस्थं स्थानं द्रोणकलशाख्यम्'—इति वि०।

** अन्नमात्र—सोमः, चरुः, पशुः, धानाः, करम्भः, पुरोडाशः, प्रतीवापः, पयश्चेति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



[ "तैरेनं* चतुराधूनोति पञ्च कृत्वः सप्त कृत्वो वा ( १२, ५, १७)"—इत्यापस्तम्बेन सूचितम् ] "विचक्षणः" सर्वस्य विद्रष्टा॥

"नृभिर्यतो"—"नृभिर्धूतः"—इति पाठौ॥ २॥ ९

२र   र   १   ५   १ र
॥ रौरवम्॥ पुनानःसोमा३धारा२३४या। आपो

र र   र   र र   ३ २   १ २
वसानोअर्षस्यारत्नधायोनिम्टतस्यसा२इदसाइ। ओहा

२   १ र रर   २   १ २   २   १
३उवा। उत्सोदेवोहिरा२३हाइ। ओहा३उवा। एयया।

२ ४ ५   २ र र र   २   ५   १ र र
औ३होवा॥(१) उत्सोदेवोहा३इरण्या२३४याः। ऊत्सोदे

र   र   र   र   ३२   १ २
वोहिरण्ययोदुहानऊधर्द्दिवियम्मधू२प्रियाम्। ओहा३उ

२   १   २   १ २   २   १
वा। प्रत्नꣳसधस्थमा२३हाइ। ओहा३उवा। सदात्।

---

* तैः निग्राभ्य-सञ्ज्ञकाद्भिः, एनं सोममित्यर्थः; अदाभ्यग्रहे इति सङ्गति-लभ्यः। अदाभ्यमिति ग्रहविशेषस्य नाम; तथाहि—'अदाभ्यं गृह्णात्यासिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनंशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्र मुपयामः सर्वत्राविशेषात्'—इति का० श्रौ० सू० १२, ५, १३—१५। अस्यार्थः—यस्मिन्नौदुम्बरे पात्रे अंशुर्गृहीतः तस्मिन् होतृचमसस्था निग्राभ्य-सञ्ज्ञा अप आनीय तस्मिंस्तिस्रः सोमलताः प्रक्षिप्याग्नयेत्वेत्यादित्रिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति। मन्त्रैः सोमलता प्रक्षेपो वेति केचित्। उपयामगृहीतोसीत्येतत् त्रिष्वपि मन्त्रेष्वादावनुषञ्जनीयं सर्वशेषत्वादाम्नानस्येति॥ किञ्च अभिषोतव्यस्य सोमस्य सेचनीया आपो निग्राभ्या उच्यन्ते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ २ १ ५ १
औ२३होवा ॥(२) प्रत्न७ सधस्था३मासा२३४दात्। प्रात्न७ स

२ २ २ ३ २ १ २ २
धस्थमासददापृच्छन्धरुणंवाजियार्षसाइ। ओहा३उवा।

१ २ १ २ १ २ २ १ २
नृभिर्द्धौतोविचा२३हाइ। ओहा२उवा। ऋणा। औ

४ ५ ४
३होवा। हो५इ। डा (३) ॥ २ * ॥ [१]

३ २ २ ४ ५ २
॥ यौधाजयम्॥ पुना३१। ना३:सो। म। धा

२ ५ १ २ १ ३ २ २ ५
रा२३४या। आपो३। वस्ना२। नश्रा३४५। षा२३४सी।

२२ १ २ १ १२ १ ३ २ २
आरात्नधाः। यो। निम्रृता२। स्यसा३४५इ। दा२३

५ २ १ २ २ ३
४सी। उत्सा२:। दाइवो२। हिरा३४५। ण्या२३४

२ ३ २ २ ४ ५ १ २ ५ १
याः ॥(१) उत्सो३१। दे३वो। हि। रण्या२३४याः। उ

२ १ २ २ २ ५ २ १ २
त्सो३। दाइवो२। हिरा३४५। ण्या२३४याः। दुहान

१ २ १ ३ २ २ ५ १
ज। धः। दिविया२म्। मधू३४५। प्री२३४याम्। प्र

१ ३ २ २ ५ २
त्ना२म्। साधा२। स्थमा३४५। सा२३४दात् ॥(२)प्र

* ऊ० गा० १प्र० १ख० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ४ ५ १ २ ५ १२
त्वा३१म् । सा३ध । स्थम् । आसा२३४दात् । प्रात्ना
१ २ २ ३ ५ २र १
३म् । सधा२ । स्थमा३४५ । सा२३४दात् । आपा
२ १ १ १ २ २ १ ५
र्क्रियाम् । ध । रुणंवा२ । जिया३४५ । षा२३४सो ।
२ १ ३ १ २ ५
नुभा२इः । धौर्ता२ । विचा ३४५ । त्वा २ ३ ४ णा (३)
॥ ३ * ॥ [ २ ]

१ २ १ २ १र
॥ ऐडमायास्थम् ॥ आयिपुना । ना:सो । मधार
र २ :र १ २
या । आपोवसा३१ । नौअर्षसी । आरत्नधा३१: ।
र २१र २ २ १
योनिम्तता । स्थसीदसी । ऊत्सोदेवा३१: । ह्रिरण्या२
२ १ २ १ २ १
३या३४३: ॥(१) आउत्सा: । दायिवो । ह्रिरण्ययाः । ऊ
२ २ १ र २
त्सोदेवा३१: । ह्रिरण्ययाः । दूद्दानऊ३१ । धर्दिवियाम् ।
२ १ २ १ १र २
मधुप्रियाम् । प्रात्नं्सधा३१ । स्थमासा२३दा३४३त् ॥(२)
१ २ १ २ १र २
आयिप्रत्नाम् । साधा । स्थमासदात् । प्रात्नंसधा
२ १र २ २
३१ । स्थमासदात् । आपृच्छिया३१म् । धरुणंवा । जि

* ऊ० गा० १प्र० १ख० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २१ १ १
यर्षसायि। नृभिर्द्धौंता३१ः। विचक्षा२३णा३४३ः। औ

२३४५ई। डा (३)॥ २० *॥ [३]

१र र र र १ २
॥ त्रिणिधनमायास्यम्॥ पुनानःसोमधाद्दाउद्दोवा।

१ १ ३ ५ १ ३ २ ३ ५
रायाआ२३४पो। वसा२। नआ३४५। षा२३४सी।

१र २ ३र ४र ५ १ र र ३ २
आरा३४। औद्दोवा। त्वधायोनिम्तता२। स्यसा३४५

३ ५ १ २ ३र ४र ५ १
यि। दा२३४सी। उत्सा३४। औद्दोवा। दायिवो२

३ २ ३ ५ २र र र र र १ २
हिरा३४५। ण्या२३४याः॥(१) उत्सोदेवोहिराद्दाउद्दोवा।

१ २ ३ ५ १ ३ २ ३
ण्यायाऊ२३त्साः। दायिवो२। हिरा३४५। ण्या२३४

५ १ २ ३र ४र ५ १ र ३ २
याः। दुद्दा३४। औहोवा। नऊधर्हि वियार२म्। मधू

३ ५ १ २ ३र ४र ५ १
३४५। म्रो२३४याम्। प्रत्ना३४। औद्दोवा। साधा

३ २ ३ ५ २ र र
२। स्थमा३४५। सा२३४दात्॥(२) प्रत्नꣳसधस्थमाद्दाउ

१ २ १ २ ३ ५ १ ३ २
द्दोवा। सादेत्प्रा२३४त्नाम्। सधा२। स्थमा३४५।

* ऊ० गा० १प्र० २ख० १०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ १ र २ ३र ४र २ १
सा२३४दात् । आपा३४ । औहोवा । क्रन्ग्वरूणंवार२ ।
२ २ ३ ५ १ २ ३र ४र ५ १
जिया३४५ । षा२३४सी । नृभा३४ । औहोवा । धौ
३ २ ३ ५
तो२ । विचा३४५ । ह्वा२३४णाः(३) ॥ १ * ॥ [४]

२र र १ २र १र १ १ २ १र
॥ कण्वरथन्तरम् ॥ पूनानःसोमधारया । अपोवसा ।
२ १ २ २ र र र र ३ ५र
नो३आर्षा३सी । आरत्नधायोनिम्रृतस्यसीदसा२३४ऐही ।
२ १र ५ २ २ २ ३
उत्सोदा२३४यिवाः । ह्रिरा३१उवा२३ । ए३ । एयय
२ र र १र २र १ २ १ २ १र र र २ १
आ ॥(१) उत्सोदेवोहिरण्ययाः । उत्सोदेवो । हा३यिरा
२ २ र र ३ ५र २ १
ण्या३याः । दुहानऊधर्दिव्यिंमधुप्रिया२३४मैही । प्रत्नꣳ
५ २ २ १ ३ २ र
सा२३४धा । स्थमा३१उवा२३ । ए३ । सददा ॥ (२)प्रात्नꣳ
१ २ १र २ १ २ १ २ १ २ २ र
सधस्थमासदात् । प्रत्नꣳसधा । स्था३मासा३दात् । आ
र ३ ५र २ १ ५ १
पृच्छ्यन्ग्वरूणंवाजियर्षसा२३४ऐही । नृभिर्द्यौ२३४ताः । वि
२ १ ३ २
चा३१उवा२३ । ए३ । चणआ (३) ॥ ४ † ॥ [५]

---

* ऊ० गा० २प्र० १ख० १सा० ।

† ऊ० गा० ४प्र० १ख० ४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ १ १र र रर र
जिह्विया३म् । जिह्वियाम् । योधारयापावकयापरिप्र

२ १ १ र २
स्यन्दतायि । सू१ता२ः । सूता२ः । इन्दुरा । श्वोनका

१र २ १ ३ ५रर १ २
३ । श्वोनका३ । त्वा२या२३४औहोवा ॥(२) हाविन्दूः ।

१ २ १ २ १ २ १ र
श्वाश्वः । ना । क्षत्विया३ः । क्षत्वियाः । तन्दुरोषम

र र र र २ १ १ र
भीनरस्सोमंविश्वाचिया । धा१या२ । धाया२ । यज्ञा

१ १ १ १ ३ ५र र
या । सन्तुवा३ । सन्तुवा३ । द्रा२या२३४औहोवा ।

३१ १ १ १
ई२३४५(३) ॥ १२ * ॥ [३५]

१ २ १ र २र
॥ मरायम् ॥ पूराः । जायितीवोअन्धसः । सः । सः ।

१ २ १ २ र र १
सूता । यमा । दयित्नवेअपस्यानᳪशुयिष्टननन । सा

२ १ र २ १ २
खा । योदीर्घंजिह्वियम् । यम् । यम् ॥(१) साखा ।

१ र २ १ २ १
योदीर्घंजिह्वियम् । यम् । यम् । योधा । रया ।

र २ र १ २
पावकयापरिप्रस्यन्दतेसुतः । तः । तः । आयिन्दूः । अ

* ऊ० गा० २२प्र० २ख० १२सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ १
श्वो। नक्त्विय:। य:। य:॥(२) आयिन्दू:। अश्वो।
२ १ २ १ २र र र
नक्त्विय:। य:। य:। तान्दू। रोषमभीनरस्सोमंविश्वा
र र र र १ २ १ २
च्याधिया। या। या। याज्ञा। यक्षा। तुवद्र्य:। य:।
ऽ ऽ ऽ १ १ १ १
य:। हाउहाउहाउ। वा३। ई२३४५(३)॥ १५ *॥ [३६]
२र र र १
॥ महावात्सप्रम्॥ हाउहाउहाउ। ओ। होहो
२ १र २ १ र र
वा। (एवन्द्रि:)। पुरोजितायि। वो। अन्धसो। धसो।
र र २ऽ १ र र
धस:। सुतायमा। दा। यित्नवे। यित्नवे। यित्न
र र २ऽ १
वे। अपश्वानम्। श्ना। थिष्टन। थिष्टन। थिष्टन।
र र र २ऽ १
सखायोदी। घा। जिह्वियम्। जिह्वियम्। जिह्वि
र र र २ऽ १
यम्॥(१) सखायोदी। घा। जिह्वियम्। जिह्वि
र र र २ऽ १ र
यम्। जिह्वियम्। योधारया। पा। वकया। वक
र र २ऽ १र र र
या। वकया। परिप्रस्य। दा। तेसुत:। तेसुत:। ते

---

* ऊ० गा० १२प्र० २ख० १५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ऽ १
स्तुतः। इन्दुरश्वः। ना। क्तवियः। क्तवियः। क्तवि
१ २ऽ १
यः ॥(२) इन्दुरश्वः। ना। कृत्वियः। कृत्वियः। कृ
र २ऽ १र र र
त्वियः। तन्दुरोषम्। आ। भीनरः। भीनरः। भी
र र २ऽ १र र र
नरः। सोमंविश्वा। चा। याधिया। याधिया। या
र २ऽ १ र र २र
धिया। यज्ञायस। ह्व। अद्रयो। द्रयों। द्रयः। द्दा
१ २ १ २
उ३। ओ। द्दोद्दोवा। २। ओ। द्दो। द्दोर। वार
५र र २११११
३४। औद्दोवा। ई२३४५(३)॥ ८ * ॥[३७] १८

अथ पञ्चमसूक्ते—

प्रथमा।

३ २३१ २ ३१२ ३
अभिप्रियाणिपवतेचनोहितो
१ २ ३२उ ३२३१२
नामानियह्वोअधियेषुवर्धते।
१ २र ३२३२उ ३
आसूर्यस्यबृहतोबृहन्नधि
२३१२ ६२
रथंविष्वञ्चमरुहद्विचक्षणः॥ १ † ॥

---

* ऊ० गा० २२प्र० १ख० ९सा०।

† छ० आ० ६, २, १, १ (२ भा० १७१ प०) = ऋ० सं० ७, ९, २३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"चनोहितः" [चन इत्यन्ननाम, चायतेरसुनि चन इत्यौणादिक-सूत्रेण निपातितः] चनसे अन्नाय हितः, यद्वा आहितान्नः सोमः "प्रियाणि" जगतः प्रीणयितृणि "नामानि" नमनशीलानि, तान्युदकानि "अभि पवते" अभितः करोति। "येषु" अन्तरिक्षस्थितेषु उदकेषु "यह्वः" महानयं सोमः "अधि-वर्द्धते" अधिकं प्रवृद्धो भवति, अपां मध्ये सोमो वसति खलु। ततः "बृहत्" महान् सोमः "बृहतः" महतः परिवृढस्य "सूर्य्यस्य" विष्वञ्चं" विष्वग् गमनम् "अधि रथम्" उपरि रथं "विचक्षणः" सर्वस्य विद्रष्टा "अरुहत्" आरोहति "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते ( मनु० ३अ०७६श्लो०)"-इति॥ १ ॥

अथ द्वितीया।

३ १२ ३१ २ ३१२३ २
ऋतस्यजिह्वापवतेमधुप्रियं

३१ २र ३२ ३१ २र
वक्तापतिर्धियोअस्याअदाभ्यः।

१२ ३२ ३१२३ २ १२
दधातिपुत्रः पित्रोरपीच्याऽ३न्नाम-

३२३१ २३२ ३२
तृतीयमधिरोचनन्दिवः॥ २ * ॥

---

* ऋ० वे० ७, २, ३३, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ऋतस्य" सत्यभूतस्य यज्ञस्य "जिह्वा" मुखत्वेन जिह्वा-स्थानीयः सोमः "प्रियं" प्रियकरं "मधु" मदकरं रसं* "पवते" क्षरति। कीदृशः? "वक्ता" शब्दकृत्; यद्वा, स्तोतृभिः क्रियमाणाः स्तुतयः साधीयस्य इति प्रतिश्रवणस्य कर्त्ता "अस्या धियः" एतस्य कर्म्मणः "पतिः" पालयिता "अदाभ्यः" रक्षोभिर्हिंसितु मशक्यः "पुत्रः" यजमानः "पित्रोः" पिता माता उभयोः† "अपीच्यम्" अन्तर्हितं यत् "नाम" तौ न जानीते नाम कर्मवेलायां तस्मात्तयोरपरिज्ञायमानं "दिवः" द्युलोकस्य "रोचनं" दीप्यमानं "तृतीयं" नाम सोमेऽभिषूयमाणे हिरण्मयेति "अधि दधाति" अत्यन्तं धारयति; "नक्षत्र-व्यावहारिक-नाम्नौ प्रभाष्य सोमयाजी तृतीय मस्य नाम"—इति भगवता बौधायनेनोक्तम्॥

"अधिरोचनम्"--"अधिरोचने"—इति पाठौ॥ २॥

अथ तृतीया।

१ २   २ ३ १ १ २   ३
अवद्युतानःकलशाᳶ॒अचिक्रद

१ २   ३ २उ   ३ १   २ ३ १ २
नृभिर्येमाणःकोशआहिरण्यये।

---

* 'मधु स्वादुतमं द्रव्यम'—इति वि०।

† 'मातापित्रोर्नाम, अथवा मातापित्रोः पृथिव्यन्तरिक्षयोः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ २ ३ १ २ ३ १ २ ३ १ २
अभीऋतस्यदोहनाअनूषताधि
२ २ ३ २ २ १ २
त्रिपृष्ठउषसोविराजसि ॥ ३ * ॥ १८

"द्युतानः" [द्युतदीप्तौ (भ्वा० आ०)] दीप्यमानो "नृभिः" कर्म्मनेतृभिर्ऋत्विग्भिः "हिरण्यये" हिरण्मयकोशे अभिषवण-चर्म्मणि ; तस्य हिरण्मयत्वं "हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धात् ; तादृशे "कोशे" "येमानः" [छान्दसे कर्म्मणि लिटि कानचि रूपम्] नियम्यमानः सोमः † "कलशान्" द्रोणाभिधान् प्रति "अवाचिक्रदत्" अवक्रन्दति शब्दायते। ततः "ऋतस्य" सत्यभूतस्य यज्ञस्य "दोहनाः" दोग्धार ऋत्विजः "इमं" सोमम् "अभ्यनूषत" अभिष्टुवन्ति [ "ग्रावाणो वत्सा ऋत्विजो दुहन्ति"—इति तैत्तिरीयक-ब्राह्मणे एषां दोग्धृत्व मभिहितम् ] "त्रिपृष्ठः" त्रीणि सवनानि तान्येव पृष्ठानि यस्य स तथोक्तः ‡ [ त्रिषु च सवनेषु सोमस्य विद्यमानत्वात्। त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् ] हे सोम ! तादृशस्त्वम् "उषसः अधि" यागाहनि "विराजसि" [ "अधिशीङ्स्थासाम्

* ऋ० वे० ७, २, २३, ३।

† 'येमानः स्तूयमानः'—इति वि०।

‡ 'त्रिपृष्ठः त्रिस्थाने त्रिलोकावस्थानः ; अथवा त्रिपृष्ठः ऋग्यजुःसामभिः ; अथवा त्रिभिर्गुणैर्देवैः सवनैर्वा'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(१,४,४६)"—इति द्वितीया] तेष्वहस्सु विशेषेण दीप्यसे। यद्वा राजिरन्तर्णीतण्यर्थः; अहानि प्रकाशयसि॥

"येमाणः"-"येमान"—इति, "अभीकृतस्य"-"अभीमृतस्य"—इति, "विराजसि"-"विराजति"—इति पाठाः॥ ३॥ १९

२ १ २ १र १र १

॥ कोत्सम्* ॥ अभ्योवा। प्रियाणिपवताइ। चनोहि

१र र र २ १ १र

इता२ः। नामानियह्वोअधियाइ। षुवर्द्धता२इ। आ

र २ १ १ २ ४ ५ २ १

सूर्य्यस्यबृहता। बृहन्नाधो२३। राथा३ंवाइस्वा। चमरू

१ २ ४ २ १

ह्वा२३त्। वाइचा३चा५णा६५६ः॥(१) कृतोवा। स्यजि

र २ १ १र र

ह्वापवताइ। मधुप्राया२म्। वक्तापतिर्द्धियोअस्याः।

२ र १ १र १र १

अदाभाया२ः। दधातिपुत्त्रःपित्रोः। अपीचाया२३म्।

१ २ ४ ५ २ १ १ २ ४

नामा३तार्त्ती। यमधाइरो२३। चाना३न्दा५यिवा६५

२ १ र २ १

६ः॥(२) अवोवा। द्युतानःकलशाः। अचिक्रादा२

१ २र र २ १ १र

त्। नृभिर्य्येमाणकोशआ। हिरण्याया२इ। अभीकृ

* 'खारकावम्'—इति ख० पु०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तस्यदोहनाः। अनूषातार२३। आधीइचाइपा। छउषा

सो२३। वाइराइजाऽ५साई५ईइ(३)॥१२*॥ [१]

॥ ऐडकावम्॥ ए५। अभिप्रिया२। णिपवतायि।

ए५। चनोहिताः। ए५। नामानियार्। ह्वोअधिया

यि। ए५। षुवर्द्धतायि। ए५। आसूरियार्। स्यवॄ

हताः। ए५। बृहन्नधी। ए५। रथंविश्वार्। चमरु

ह्वात्। ए५। विचक्षणाः॥(१) ऋतस्यजार्यिः। ह्वा

पवतायि। ए५। मधुप्रियाम्। ए५। वक्तापतार्यिः।

धियोअस्याः। ए५। अदाभियाः। ए५। दधातिपूर्त्।

त्रःपित्रोः। ए५। अपीचियाम। ए५। नामतृतार्

यि। यमधिरा। ए५। चनन्दिवाः॥(२) ए५। अवद्यु

* ऊ० गा० १प्र० १घ० १२सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ४ ५ ४ ४ ५ ४ ४
तार्२ । नःकलशाः । एपु । अचिक्रदात् । एपु । नृभि

५र २ ४र ५ ४ ४ ५ ४ ४
र्य्येमार्२ । णःकोशआ । एपु । हिरण्ययायि । एपु । अ

५ २४र ५ ४ ४ र५ ४ ४
भिक्रतार्२ । स्यदोहनाः । एपु । अनूषता । एपु । अ

५ २४ ५ ४ ४र५ ४
धित्रिपार्२ । ष्ठउषसाः । एपु । विराजसायि । हो५

ई । डा(३) ॥ २ * ॥ [२]

५ २ ४र५४ ५ २१ २
॥ वैखानसम् ॥ अभिप्रो३याणिपवतायि । चनोहि

१ २र ३र २ १ २र १ २ १ १ १
ताः । नामानियार२३ । ह्वोअधियायि । प्रुवार्द्धतायि ।

२र ३ २ १ ७ १ २ ३ २ १
आसूरिया । स्यमृ२ह्वतोर२३ । बृहन्नधायि । रथांवि

१ २ ३ १ १ १ ३ २ ५ १
ष्वा । चमरुह्वा२३त् । विचक्षणा३४३ः ॥(१) क्रतस्या३

४ ५र ४ ५ २ १ २ १ २ ३र २ १ १ ३र
जिह्वापवतायि । मधूप्रियाम् । वक्तापता२३यिः । धियो

२ १ २ १ १ ३र २ १ ७ १
अस्याः । अदाभियाः । दधातिपूत् । त्रःपा२यित्रो२३ः ।

* ऊ० गा० ९प्र० १ख० २गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३र २ र १ २ १ २० २ १ २ ३
अपीचियाम् । नामाह्वतायि । यमधिरो२३ । चनन्दि

२ ५ २ ४र५ ४ ५ २ १ २ १
वा३४३: ॥(२) अवद्यू३तानःकलशान् । अचायिक्रदात् ।

२ ३ २र १ २ ३र २ १ २ १ २ ३र २
नृभिर्य्येमार२३ । णःकोशआ । हिराण्ययायि । अभीऋ

१ ० १ २ ३र २ १ २ १ २
ता । स्यदो२हनार२३ः । अनूषता । अधायित्रिपा । ष्ठ

३ २ १ २ ३र २ १
उषसो२३ । विराजसा३४३यि । -ओ२३४५ई ।

डा(३) ॥ १८* ॥ [३]

४ ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ अभाऽ५यिप्रि । या३णा३यिपव

५ १ र र र र र २ १
तायि । चाऽनोहितोनामानियाह्वोअधियायि । षू३वा

२ २ १र १ र २
ह्वो३तायि । आसू२र्यस्यबृहतोबृहन्न । धिरा२३थाम् ।

१ २ २ १ ३ २ १
ऊम्मायि । वा३यिश्वा । च । मरुद्दिचा२स्सणाउ ॥(१) णा

२ १ र र र र २
आ । तस्यजिह्वापवतेमधुप्रियंवक्तापतिर्द्धियोअस्याः । आ

* कौ० गा० १४प्र० १ख० १८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ १ १ र र
दाभा३याः। दधा२तिपुत्त्रःपित्रोरपीचि। यन्ना२३
२ १ २ २ १ र ३ २
मा। ऊम्मायि। ता३र्त्ता। यामधिरोचना२न्दिवाउ ॥(२)
१ २ १ र र र र र
वा३्रा। वद्युतानःकलशाँ३अचिक्रदन्नृभिर्येमाणःकोशआ।
२ १ २ २ १ १ र र र
हा३यिराण्या३याःयि। अभी२ऋतस्यदोहनाअनूष। त
२ १ २ २ १ र ३
आ२३धा। ऊम्मायि। त्रा३यिपा। छाउषसोविरा२ज
२ १ १ १ १
साउ। वा२३४५ (३) ॥ १५ * ॥ [४]

१ २ १ १
॥ वैधृतवासिष्ठम् ॥ अभिप्रियाणी२। प। वता२यि।
३ २ ३ ५ २र१र २ १ १
चनोहा२३४यिताः। नामानियाह्वो२। अ। धिया२
३ २ ३ ५ २र१र २ १ १
यि। षुवर्द्धा२३४तायि। आसूरियास्या२। बृ। हतो
१ २ २ ५ २ १ २ १ १
२। बृहन्ना२३४धायि। रथंविष्वाञ्चा२म्। अ। रुहा
२ ४ २ १
२३त्। विचा३चा५णाई ५ ईः ॥(१) ऋतस्यजायिह्वा२।

* ऊ० गा० १६प्र० १ख० १५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१   २ २ ३   ५   २ १र २ १
प। वतार्यि। मधुप्रा२३४याम्। वक्तापतायिश्ली२।

१   २ २ १   ५   १ १र २१
यः। अस्यारः। अदाभा२३४याः। दधातिपूष्वा२ः।

१   ३ १   ३   ५   २र१ १ १
पि। चोरः। अपायिचा२३४याम्। नामद्रतायिया२

१   २   ४   १
म्। अ। धिरो२३। चना३न्दा५यिवा६५६ः॥(२) अ

१   १   ३ २   ३   ५
वद्युताना२ः। क। लश्या२र२। अचायिक्रा२३४दात्।

२ १ २र१   र   १   ३ २ ३   ५
नृभिर्य्यमाणा२ः। को। ग्रश्रा२। हिरण्या२३४यायि।

२ १र २ १   र   १   ३ २ ३   ५   २
अभीक्ष्ततास्या२। दो। हना२ः। अनूषा२३४ता। अ

१ १ १   १   २ ४
धित्रिपार्थ्वो२ः। उ। षसो२३। विरा३जा५सा६५६

यि(३) ॥ १४ * ॥ [५]

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य

पञ्चमः खण्डः † ॥ ५ ॥

---

* ऊ० गा० १६प्र० १अ० १४सा०।   † 'उक्त आर्भवः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे,

प्रथमसूक्ते प्रगाथे—प्रथमा ।

३ १ २ ३ १ २ ३१ २ ३ १ २
यज्ञायज्ञावोअग्नयेगिरागिराचदक्षसे ।
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
प्रप्रवयमम्‌तञ्जातवेदसम्प्रियम्मित्रन्नशᳩसिषम् ॥१*॥

हे स्तोतारः! "वः" यूयं "यज्ञायज्ञा" यज्ञे यज्ञे सर्व्वेषु यागेषु "दक्षसे अग्नये" प्रवृद्धाग्नये "गिरा गिरा" स्तुतिरूपया वाचावाचा स्तोत्रं कुरुतेति शेषः। च शब्दो भिन्नक्रमो वः-इत्यस्मात् परो द्रष्टव्यः। यूयं "च" स्तोत्रं कुरुत। "वयम्" अपि "प्रप्रशंसिषम्" ["प्रसमुपोदः पादपूरणे (८, १, ६०)"—इति प्र-शब्दस्य द्विरुक्तिः पादपूरणार्था; व्यत्ययेनैकवचनम् (३, ४, ६८); चान्दसोलुक् (७, १, ३९)] प्रशंसाम कीदृशम्? "अमृतम्" मरणरहितं "जातवेदसम्" जातानां वेदितारं जातप्रज्ञं जातधनं वा "मित्रं न" सखिभूतमिव "प्रियम्" अनुकूलम्। यद्वा, व्यत्ययेन (३, ४, ६८) त्वमित्यस्य वसादेशः; अग्नय इति च कर्म्मणि चतुर्थी, "क्रियाग्रहणं कर्त्तव्यम्"—इति कर्म्मणः सम्प्रदानत्वात्; च-शब्दश्च चणिति निपातः, चेदर्थे वर्त्तते; दक्षस इति च दक्षेर्वृद्धिकर्म्मणः (भ्वा० आ०) असु-

* छ० आ० १, १, ४, १ (१ भा० १४७ पृ०) = ऋ० वे० ४, ८, १, १। 'अग्नि-र्वेश्वानरआर्ष अग्निः स्तोत्रदेवता'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भावितण्यर्थाल्लङि रूपम्; चण्-योगात् "निपातैर्य्ययदिहन्त० (८, १, ३०)"—इति निघात-प्रतिषेधः। तत्राय मर्थः—हे स्तोतः! त्वं यज्ञे यज्ञे इम मग्निं गिरा गिरा स्तुत्या स्तुत्या च दक्षसे च वर्द्धयसि चेत् वयमपि अमृतत्वादिगुणकं तं प्रशंसामः॥ १॥

अथ द्वितीया।

३ १र २र३ २ ३ १र २र३१र २र ३ १ १
ऊर्ज्जोनपात७ुसह्निनायमस्मयुर्द्दाशेमहव्यदातये।
२ ३ १ २ ३ १र २र३ २ ३ २ ३ २ ३ १ २
भुवद्वाजेष्वविताभुवदृधउतत्रातातनूनाम्॥२*॥२०†

"ऊर्जः" अन्नस्य बलस्य "नपातं" पुत्रं प्रशंसिष मित्यनुषङ्गात् प्रशंसामेत्यर्थः ‡। "ह्निना" [—इति निपात-द्वय-समुदायो हीत्यस्यार्थे ¶] "सः" खलु "अयम्" अग्निः § "अस्मयुः" अस्मान् कामयमानो भवति। वयञ्च "हव्यदातये" हव्यानां हविषां देवेभ्यो दात्रे तस्मा अग्नये "दाशेम" हवींषि दद्याम।

* ऋ० वे० ४, ८, १, २। † 'अत्र अग्निष्टोम साम'—इति वि०।

‡ 'ऊर्जः अन्नानि। न पात, न शब्द उपमार्थीयः यथा, अन्नानि। पिबन्तं पालयन्तं भक्षयन्तं वा'—इति वि०।

¶ 'ह्निनः, ह्निनो मनुष्यः; हीनायुर्हीनमक्तिर्हीनप्रज्ञो वा'—इति वि०।

§ 'अयं यजमानः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तम् "उत" अपिच "तनूनाम्" तनयानां मत्पुत्राणाञ्च* "त्राता" रक्षिता "भुवत्" भवतु ॥ २ ॥ २०

४ ३ ४ २ ५ ५
॥ यज्ञायज्ञीयम् ॥ यज्ञाऽ५य। ज्ञा३वो३ग्नायाइ।
१ र २ १ २ २ १ १
आइराइरा। चा३दा३चा३साइ। पप्री२वयममृतम्।
र २ १ २ २ १
जाता२३वा। ऊम्माइ। दा३साम्। प्रायम्मित्र॑सुषा
३ २ १ २ १ २ १ २
२॑सिषाउ ॥(१) प्रायाम्। माइत्राम्। सू३ग्ना॑सी
२ र १र १ र २ १
३षाम्। ऊर्ज्जोनपा२त॑सहि। नाया२३मा। ऊम्मा
२ २ १ र ३ २ १ २ १
इ। स्मा३यूः। दाशेमहव्यदा२तयाउ ॥(२) दाशे। मा
२ १ २ २ १ र १ र २
हा। व्या३दाता३याइ। भुवद्वाजे२षवि। ताभू२३वा
१ २ २ १ र र
त्। ऊम्माइ। वा३र्द्धाइ। ऊतत्रातातन२नाउ। वा
१ १ १
३४५(३) ॥ १४ † ॥ [१]

२ र र र २
॥ विश्वोविश्वीयम् ॥ यज्ञायज्ञाह्म्। वो३अग्नयायि।

* 'तनूनां शरीरिणाम्'—इति वि०।

† ऊ० गा० १प्र० १अ० १४सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ १ २ २ १ १ र
इराइरा । चा३दाक्षा३सायि । पप्री रेषयमन्तम् । जा
२ १ २ २ १ ५
तार३वा । ऊम्मायि । दा३सा३म् । प्रा२३४य९हायि ।
१ ३२ २ ५ १ २
ओ । ऊवायि । मा२३४यिचाम् । ऊम्मायि । सू३
२ १ ५र ५ २
श्ना३ । सा२३४यिषाम् । एह्रियाई्हा ॥(१) प्रियम्मित्रम् ।
र २ १ २ १ १ र
हम् । सू३श९सिषाम् । ऊ३र्ज्जोनाइपा । न९सहि । ना
२ १ १ २ १ र५
या२३मा । ऊम्मायि । स्मा३यू३ः । दा२३४शेहायि ।
१ ३२ २ ५ १ २ २
ओ । ऊवायि । मा२३४हा । ऊम्मायि । व्या३दा३ ।
१ ५र ५ २रर र र
ता२३४यायि । एह्रियाई्हा ॥(२) दाशेमहाझम् । व्या३
२र १ २ २ १ र २ १
हातयायि । भू३वादा३जे । षवि । ताभू२३वात् । ऊ
२ २ १ ५ १ ३२
म्मायि । वा३र्द्धा३यि । ऊ२३४तहायि । ओ । ऊवा
३ ५ १ २ ३
यि । त्रा२३४ता । ऊम्मायि । ता३नू३१२३४नाम् ।
५र ५ ४
एह्रियाई्हा । हो५ई । डा(३) ॥ ५ * ॥ [२]

* ऊ० गा० १२प्र० २ख० ५सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ वारवन्तीयोत्तरम्॥ यज्ञायज्ञाऔहोहायि। वौ अग्ना२३४यायि। इराइराचदक्षासो२३४हायि। पप्री वयमम्तञ्जातवेदा३५। औहोवा। इहा२३४हायि। उर्ज्वा२३४साम्। प्रियम्मि। त्वा॰सुश॰सा३४। औ होवा। इहा२३४हायि। औहो३१२३४५। षाम्। ए हियाइहा॥(१) प्रियम्मित्वाऔहोहायि। सूश॰सा२३४ यिषाम्। ऊर्ज्जीना२३४हा। पात॰सहिनायमस्मा३४। औहोवा। इहा२३४हायि। उर्ज्वा२३४यः। दाशेम। हाव्यदाता२३४। औहोवा। इहा२३४हायि। औ हो३१२३४। यायि। एहियाइहा॥(२) दाशेमहाऔहो हायि। व्यादाता२३४यायि। भुवाद्दा२३४हा। जेष विताभुवद्दा३४। औहोवा। इहा२३४हायि। उर्ज्वा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३४ह्वायि। उतत्वा। तातन् ३४। औहोवा। इहा २३४हायि। औहोऽ१२३४। माम्। एहियाऽहा ३)

॥ ११ *॥ [३]

॥ महावैश्वामित्रम्॥ हयायि। हयाऽ३। ओहाओ हा। हयायि। हयाऽ३। ओहाओहा। हयायि। ह याऽ३। ओहाओहा। यज्ञायज्ञा। वोअग्नाया२यि। इराइरा। चदक्षासा२यि। पप्रीवयममृतञ्जा। तवे दासा२म्। प्रियम्मित्राम्। सुशꣳसायिषा२म्॥(१) प्रियम्मित्राम्। सुशꣳसायिषा२म्। ऊर्ज्जः। नापा २। नापा२। तꣳसहिना। यमस्मायू२ः। दाशेम हा। व्यदाताया२यि॥(२) दाशेमहा। व्यदाताया२ यि। भुवत्। वाजा२यि। ष्ववितो। भुवद्वार्द्धा२यि।

* ऊ० गा० १३प्र० १ख० ११सू०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र १ ३र२१
उतत्वाता। तनूनाऽ२म्। उतत्वा। तातनूनाऽ२म्।
४ ५ ४ ५ २
हयायि। हया३। ओहाओहा। हयायि। हया३।
४ ५ ४ ५ २ ४ ५ ४ ५
ओहाओहा। हयाहि। हया३। ओहाओहा।
२ ५ ३ ५ ३
हो४इडा। हो४इडा। हो२३४५ई। डा(३)॥ २० *॥[४]

२र र र र र र २
॥ दैर्घश्रवसम्॥ यज्ञायज्ञावोअग्नयओहाओहा३ए।
१र १र १ २र ऽ २ ऽ २ २ ३ २
इराइराचदक्षसे। ओ३हा। ओ३हा३ए३४। पप्रो ३४
३ २ १ऽ २ र १ र २ ऽ २
वयाम्। अमृतम्। जातावेदसाम्। ओ३हा।
ऽ २ २ ३ २ ३ २ २ १ ५
ओ३हा३ए३४। प्रिया३४म्मित्रा३म्। सुशो२३४वा।
४ ५ २ र र र
सा५यिषो६हायि॥(१) प्रियाम्मित्रꣳसुशꣳसिषमोहाओ
२ ऽ १र २ ऽ २ २ २ ३
हा३ए। ऊर्ज्जोनपा। ओ३हा। ओ३हा३ए३४। तꣳ
२ ३ २ २ ऽ २ २ २
सा३४हिना। यामस्मयुः। ओ३हा। ओ३हा३ए३४।
३र २ ३ २ २ १ ५ ४ ५
दाशा३४यिमहा३। व्यदो२३४वा। ता५योऽ६हायि॥(२)

* ऊ० गा० २१प्र० २अ० २०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र र र र र १ १ र २ ऽ
दाशेमहव्यदातयओ्होदाओहा३ए। भुवद्वाजायि। ओ

२ ऽ २ २ ३ २ ३ १ १ २र ऽ
३हा। ओ३हा३ए३४। षुवा३४विता। भुवद्वृधे। ओ

२ ऽ २ २ १ २ ३ २ १ ५
३हा। ओ३हा३ए३४। उता३४त्राता३। तौ२३४वा।

४ ५
नू५नो६हायि(३) ॥ २१ * ॥ [५]

२र र र २ र १ १
॥ कण्वबृहत् ॥ औहोयज्ञायज्ञा३ए। वोअग्ना१या

३र २ १ र१र र १ २
२३४यि। हाहोयि। आयिराद्वराचदक्षसे। पप्रीवा१

३र र ३ २ १ ५
या२३४म्। हाहो। सुश्रा३। सा२३४यिषाम्। उ

५ २र र २ १ २
ऊवा६हाउ ॥(१) औहोप्रियम्मित्रा३मे। सुश्राऽसा१यि

३र २ १ र१र १ २
षा२३४म्। हाहोयि। ऊर्ज्जोनपा। तऽसाहा१यिना

३र २ १ २ ३र २ १र
२३४। हाहोयि। यमास्मा१यू२३४ः। हाहोयि। दा

२ ३र२ ३ २ १
शायिमा१हा२३४। हाहो। व्यदा३। ता२३४यायि।

५ ५ २र र र र २ १
उऊवा६हाउ। वा ॥(२) औहोदाशेमहा३ए। व्यदा

* ऊ० गा० ११प्र० २ख० २१सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २र २ १ २र र १ र
ता१या२३४यि। हाद्दोयि। भूवद्वाजे। पुत्रात्रा१यिता

२र २ १ २ २र २ १
२३४। हाद्दोयि। भुवाद्दा१र्द्धा२३४यि। हाद्दोयि। उ

२ २र २ २ २ ५
तान्वा१ता२३४। हाहो। तनू३१२३४नाम्। उङ्वा६

५
हाउ। वा(३)॥ ८*॥ [६] २०

अथ त्र्यचात्मक-द्वितीये सूक्ते†—प्रथमा।

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २
एह्यूषुब्रवाणितेग्नइत्थेतरागिरः।

३ १ २ ३ १ २
एभिर्वर्द्धासइन्दुभिः॥ १ ‡॥

हे "अग्ने!" "एहि" आगच्छ "ते" तुभ्यं च तदर्थं "गिरः" स्तुतीः "इत्था" इत्थ मनेन प्रकारेण "सु ब्रवाणि" सुष्ठु ब्रुवाणीत्याशास्यते। ताः स्तुतीः शृणिवत्यर्थः। "ऊ"—इत्येतत् पूरकम्। "इतराः" असुरैः कृताः स्तुतीः शृणिवति शेषः। तथा च ब्राह्मणम्—"अग्निरित्येतरागिर इत्यसुराहि वा इतरागिरः"—इति। अपिच आगतस्त्वम् "एभिः" एतैः इन्दुभिः सोमैः "वर्द्धसे" वर्द्धस्व॥ १॥

* ऊ० गा० २१प्र० १ख० ८सा०।

† 'उक्तोऽग्निष्टोम इदानी मुक्थोऽभिधीयते'—इति वि०।

‡ छ० आ० १, १, १, ७ (१ भा० १०४ पृ०) = ऋ० वे० ४, ५, २४, १। ऋ० शाकमश्वः। छ० गायत्री। एवमेवोत्तरत्र।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ २क २र ३ २ ३ १ २ ३ १ २
यत्र क्व च ते मनो दक्षन्दधस उत्तरम् ।

२ ३ १ २
तत्रा योनिं कृणवसे ॥ २ * ॥

हे अग्ने! "ते" तव "मनः" अनुग्रहात्मक मन्तःकरणं "यत्र" यस्मिन् देशे "क्व च" कस्मिंश्चिद् यजमाने वर्त्तते, "तत्र" तस्मिन् यजमाने वर्त्तमाने "उत्तरम्" उन्नततरं श्रेष्ठं "दक्षं" बलकर मन्नं वा "दधसे" धारयसि तथा "योनिं" स्थानं च "कृणवसे" तस्मिन् यजमाने करोषि ।

"तत्र योनिं"-"तत्रासदः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २र३ १ २ ३ १ २र ३
नहि ते पूर्त्तमक्षिपद्भुवन्नेमानाम्पते ।

२ ३ १ २
अथा दुवो वनवसे ॥ ३ † ॥ २१

हे अग्ने! "ते" त्वदीयं "पूर्त्तं" पूरकं तेजः ‡ "अक्षिपत" अक्ष्णोः पातकं विनाशकं "न हि भुवत्" न भवतु सर्व्वदा

---

* ऋ० वे० ४, ५, २४, २ । † ऋ० वे० ४, ५, २४, ३ ।

‡ विवरणनये "पूतम्"—इति पाठः । अतएव 'पतं पावनात्मकम्'—इति व्याख्यातम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अस्माकं दर्शनसामर्थ्यं करोतु। हे "नेमानां पते" नेमशब्दोऽल्पवाची, मनुष्याणां मध्ये कतिपयानां यजमानानां * पते पालक! "अथ" अतः कारणात् "दुवः" [दुवस्यतिः परिचरणकर्मा (निघ० ३, ५, ५)] अस्माभिर्यजमानैः कृतं परिचरणं "वनवसे" सम्भजस्व ॥ २ ॥ २१

५र र २ ४ र ५ ५ १ र
॥ साकमश्वम् ॥ एह्यूषू३ब्रवाणा६इताइ। यन्नइत्थे
र १ २र १ २ १
तरागा२इराः। एभा२इर्वर्द्धा। सयार३हा३४३इ। दू२
५ ५ ५ २ ४ र ५ ५ १
३४ओ६हाइ। यत्रकू३वचतेमा६ना:। दत्तन्दधसउत्त
१ १ १र ० २ १
२राम्। तत्रा२यानाइम्। कृणा२३हा३४३इ। वा२३
५ ५ ५ २ ४र ५ ५ १ र
४सो६हाइ ॥(२) नह्रिता३इपूर्त्तमच्चा६इपात्। भुवन्ने
र र १ २ १ १
मानाम्पा२ताइ। अथा२दुवाः। वना२३हा३४३इ। वा
५ ५
२३४सो६हाइ(३) ॥ १५ † ॥ [१]

५र र र र १ १ १
॥ साकमश्वम् ॥ एहियूषाऔहोहायि। ब्रवाणा२
५ २ १ ५ १र र २ ३र
३४यितायि। अग्नाआ२३४यिद्धायि। थेतरागा३४। औ

* 'नेमानां मरो रणाम इन्द्रियाणां वा'—इति वि०।

† ऊ० गा० १प्र० १ख० १५सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५ १ २ ५ २ ३ ५ २र १ २
चोवा । इडा२३४हायि । उऊवा२३४रा: । एभिर्व ।

१ ७ २ ३र ४र ५ १ २ ५ ३र २
र्धसइन्दू३४ । औहोवा । इडा२३४हायि । औहो३१२

५र ५ २ र र १ २
३४ । भी: । एहियाइ्हा ॥(१) यत्रकुवाऔहोहायि ।

२ ५ २ १ ५ १ २
वार्तायिमा२३४ना: । इत्तान्दा२३४हा । धसउत्ता३४ ।

३र ४र ५ १ २ ५ २ ३ ५ २ १
औहोवा । इडा२३४हायि । उऊवा२३४राम् । तन्

२र १ ७ २ ३र ४र ५ १ २ ५
यो । नायिकृणवा३४ । औहोवा । इडा२३४हायि ।

३र २ ५र ५ २ र र र
औहो३१२३४ । सायि । एहियाइ्हा ॥(२) नहितेपूऔ

१ २ २ ५ २ १ ५
होहायि । तामहा२३४ग्निपात् । भुवान्ना२३४यिहायि ।

१र र २ ३र ४र ५ १ २ ५ २ ३
मानापा३४ । औहोवा । इडा२३४हायि । उऊवा२३

५ २ १र २ १ ७ २ ३र ४र ५ १ २
४तायि । अथादु । वोवनचा३४ । औहोवा । इडा

५ ३र २ ५र
२३४हायि । औहो३१२४५ । साई । एहियाइ

५
हा(३) ॥ १२ * ॥ [२] २१

---

* ऊ० गा० ३प्र० १अ० १२सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीयसूक्ते, प्रगाथे—

प्रथमा।

३ २ ३ १ २ ३ १ २ ३ ३ १ २ ३ १ २
वयमुत्वामपूर्व्यस्थूरन्नकच्चिद्भरन्तोवस्यवः।
१ २ ३ १ २
वज्रिञ्चित्रᳪंहवामहे॥ १ *॥

हे "अपूर्व्य" त्रिषु सवनेषु प्रादुर्भूतत्वादभिनव! हे "वज्रिन्" वज्रवन्निन्द्र! "भरन्तः" सोमलक्षणैरन्नैस्त्वां पोषयन्तः "वयम्" "चित्रं" चायनीयं विविधरूपं वा "त्वामु" त्वामेव "अवस्यवः" रक्षणमात्मन इच्छन्तः सन्तः "हवामहे" आह्वयामः। तत्र दृष्टान्तः—"स्थूरं न" यथा भरन्तः व्रीह्यादिभिर्दृढं परयन्तो जनानां स्थूरं स्थूलं गुणाधिकं "कच्चित्" कञ्चित् पुरुषं यथाह्वयन्ति तद्वत्।

"वज्रिन्"-"वाजः"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ ३ २ ३ २ ३ १ २ ३ १ २ ३ १
उपत्वाकर्मन्नूतयेसनोयुवोग्रश्चक्रामयोधृषत्।
१ २र ३ १ २ ३ १ ३ १ २ ३ १
त्वामिद्ध्यवितारंववृमहेसखायइन्द्रसानसिम्॥२ †॥२२

* ऋ० आ० ५, १, २, १ (१ भा० ८३० पृ०) = ऋ० वे० ६, २, १, १।
† ऋ० वे० ६, २, १.२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमपादः प्रत्यक्षकृतः। हे "इन्द्र!" "कर्मन्" अग्निष्टोमादि कर्मणि* "ऊतये" रक्षणाय "त्वा" त्वाम् "उप" गच्छामः†। द्वितीयः पादः परोक्षकृतः। "यः" इन्द्रः "धृषत्" धृष्णोति शत्रूनभिभवति ["ञि धृषा प्रागल्भ्ये (स्वा० प०), "बहुलं छन्दसि (२, ४, ७३)"—इति शप्रत्ययः] "युवा" तरुणः "उग्रः" उद्गूर्णः स इन्द्रः "नः" अस्मान् प्रति "चक्राम" आगच्छतु; यद्वा, चक्राम अस्मानुत्साहयुक्तान् करोतु [क्रमतेः सर्गार्थे व्यत्ययेन परस्मैपदम्]॥ परोऽर्द्धर्चः प्रत्यक्षकृतः। "सखायः" समानख्याना बन्धुभूता वा वयं "सानसिं" ["वनषण सम्भक्तौ (स्वा० प०] सम्भजनीयम् "अवितारं" सर्वस्य रक्षितारं "त्वामित्" त्वामेव "वव्रमहे" वृणीमहे सम्भजामहे। "हि" प्रसिद्धौ [हि-प्रयोगादनिघातः (८, १, ३४)॥ २॥ २२

५ ४ २ ४ ५र ४ ५ २र १
॥ सौभरम्॥ वयाऽ३मूऽ३त्वामपूर्विंयोवा। स्थूरन्नक

७ १ ७ १ २ ५ १
च्चिद्भराऽ२न्ताऽ३वाऽ२३। हो। स्याऽ२३४वाः। वज्रिञ्चित्रम्।

ऽ २ १ ३ ५र र ४ १
हवाऽ३हाऽ३इ। माऽ२हाऽ२३४औहोवा॥(१) वज्राऽ३इ्न्द्राऽ३

४ ५र ४ ५ १ र र १ ७
इन्द्रं हवामहोवा। उपत्वाकर्म्मन्नूताऽ२याऽइसना २ ३ः।

२ ९ ५ १ र ऽ २ २ १
होइ। यूऽ२३४वा। उग्रश्चक्रा। मयोऽ३हाऽ३इ। धाऽ२

* 'कर्म्मन्, कर्म्मणा यः सम्भजते तस्य सम्बोधनं हे कर्मान्'—इति वि०।

† 'उप, समीपे स्थिता'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५र र ५ ४ २ ४ ५र ४ ५ १र
षा२३४औहोवा ॥(२) उग्रा३स्वा३क्रामयोधृषोवा। त्वा

१ १ २ ५ १ र
मिध्यविता२रांववा२३। हो। मा२३४हाइ। सखाय

ऽ २ १ २ ५र र २ १ १
इ। द्रसा३हा३इ। ना२सा२३४औहोवा। ऊ२३

१ १
४५(३) ॥ १६ * ॥ [१]

५ २ ४र५४र ५ २र१२ १
॥ कालेयम् ॥ वयमु३त्वामपूर्विया। स्थूरान्नकात्।

२ १ २ १ ५ २ २ १
चिद्भरा२३। ता३ः। आ२३४। व। स्या३वा:। वज्रा

१२ २ ५ ४ ५
यिच्चित्रौ। वा ३४३ ओ३४वा। हवा५महायि ॥(१) व

२ ४ ५ ४र ५ २ १ २र१ २र १
ज्रिचा३यिच्र्ह्वामहायि। उपात्वाका। मनूता२३।

२ १ ५ २ २ १ २ २
या३यि। सा२३४:। नः। यू३वा। उग्रास्वक्रौ। वा

२ ५ ४ ५ २ ४र५४
३४३ओ३४वा। मयो५धृषात् ॥(२) उग्रस्वा३क्रामयो

५ २ १ २ १ २ १ २ १
धृषात्। तुवामिद्धायि। अविता२३। रा३म्। वा

५ २ २ १ २ २ २
२३४। वृ। मा३हायि। सखायऔ। वा३४३ओ३४

५ ४ ४
वा। द्रसा५नसायिम्। होवा५ई। डा(३) ॥ १० † ॥[२]२२

* क० गा० १प्र० १ख० १६गा०। † ज० गा० २१प्र० १ख० १०गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थदृचे—प्रथमा।

२ ३क २र ३१२३ १ २११२ २१ २
अधाहीन्द्रगिर्वणउपत्वाकामइमहेससृग्महे।

३२ ३१२३२ २
उदेवग्मन्तउदभिः॥ १ *॥

"अधाहि" सम्प्रति हि "त्वा" त्वां "कामे" काम मभिलषितमर्थम् "ईमहे"। यद्वा, "कामे" कामान् कमनीयान् स्तोमान् "उपससृग्महे" उपसृजामः त्वां प्रापयाम इत्यर्थः। तत्र दृष्टान्तमाह—"उदेव" यथा उदकेन "ग्मन्तः" गच्छन्तः पुरुषाः "उदभिः" अञ्जलिनोत्क्षिप्योदकैः समीपस्थान् पुरुषान् क्रीडार्थं संसृजति तद्वदित्यर्थः॥

"कामईमहेससृग्महे"-"कामामहस्ससृज्महे"—इति च पाठः। "उदेवग्मन्तः"-"उदेवयन्तः"—इति च पाठौ॥ १॥

अथ द्वितीया।

१ २र३२ ३१२ ३१२
वार्णत्वायव्याभिर्वर्द्धन्तिशूरब्रह्माणि।

३ १ २ ३१२
वावृध्वाꣳसश्चिदद्रिवोदिवेदिवे॥ २ †॥

* छ० आ० ५, १, २, ८ (१ भा० ८२६ पृ०) = ऋ० वे० ६, ७, २, १।
† ऋ० वे० ६, ७, २, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "अद्रिवः" वज्रिन्! "शूर" इन्द्र! "वार्णं" यथोदक-मुदकस्थानं "सव्याभिः" नदीभिः ['अवनयः', 'यव्या'—इति (निघ० १,१३, १-२) नदीनामसु पाठात्] "वर्द्धन्ति" वर्द्धयन्ति, तथा "ब्रह्माणि" स्तोत्रैः * "वावृध्वांसं" "चित्" यथा निरुदकं देशं नदीभिः तथा न, किन्तु प्रवृद्धमेव "त्वा" त्वां "दिवेदिवे" अन्वहं वर्द्धयन्ति स्तोतारः॥ २॥

अथ तृतीया।

२ २ ३ १ २ ३ १ ३ १ २ ३ १ १र ३ १ २ ३ १ २

युञ्जन्तिहरीइषिरस्यगाथयोरौरथउरुयुगेवचोयुजा।

३ १ २ ३ १ २

इन्द्रवाहास्वर्विदा॥ ३ †॥ २३ ‡

"इषिरस्य" गमनशीलस्येन्द्रस्य "उरुयुगे" महायुगे "उरौ" महति "रथे" "इन्द्रवाहा" इन्द्रस्य वाहनभूतौ "वचोयुजा" वचनमात्रेणैव युज्यमानौ "स्वर्विदा" स्वर्गाख्य मिन्द्रस्य स्थानं जानन्तौ "हरी" एतन्नामकावश्वौ "गाथया" ¶ स्तोत्रेण स्तोतारः "युञ्जन्ति" योजयन्ति॥

* 'ब्रह्माणि अन्नानि, मैथिवस्तवनानि वा, स्तोम-शस्त्राणि कर्माणि वा'—इति वि०।

† ऋ० वे० ६, ७, २, ३।  ‡ "घव नामैषम्"—इति वि०।

¶ 'गाथया, एकवचनं बहुवचनस्य स्थाने द्रष्टव्यम्, गाथाभिः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"उरुयुगेवचोयुजाइन्द्रस्यवाहास्वर्विदा"-"इन्द्रवाहावचोयुजा" —इति पाठौ ॥ ३ ॥ २३

२ ३ र २ १ २ १
॥ आर्षभम् ॥ अधाहीन्द्रगिर्वणा३ए। उपात्वा३का।

१ २ ५ २ १ २ ३र र ५
मही२मार२३४द्धाई। सद्धग्माहा। औहौहो२३४वा।

१ र ५ २ १ ३ ३र र ५ १
ऊ२३४देहाइ। वग्मान्ताऊ। औहौहो२३४वा। हा२

५र ५ २र र र २ १
३४औः। एहियाऽहा ॥(१) वार्णत्वायव्याभी३रे। वर्द्धा

२ २ १ ३ ५ २र १ २ ३र र
न्तौ३पूः। रब्रा२ह्मा२३४णी। वावृध्वा३सा। औहौहो

५ २ ५ २ १ २ ३र र
२३४वा। चा२३४इदद्धाइ। द्रिवोदाइवा। औहौहो

५र ५ २ र १
२३४वाइ। एहियाऽहा ॥ २) युञ्जन्तिहरीइषिरा३ए।

१ २ १ २ १ २ २ १ २
स्य। गा। थ। या। उरौरा३थाइ। उरुड३यू२३४

५ २ १ २ ३र र ५ १ ५
गाइ। वचोयूजा। औहौहो२३४वा। आ२३४इन्द्रवा

२र १ २ ३र र ५ १
ह। वाहाखवा। औहौहो२३४वा। वा २ ३ ४ इदा।

५र ५ ३
एहियाऽहा। औऽ५ई। डा(३) ॥ १७ * ॥ [१]

* ऊ० गा० १प्र० १अ० १०साम।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २ १ २
॥ द्यौतानम् ॥ हा३। ओ३हा३। ओ३हा३। हा
१ र ३ २ ३ ५ १ र
यि। अधाहियार्२यि। द्रगिर्वा२३४णाः। उपत्वाका२।
३ २ ३ ५ ५ २ ३ ५ १ र
मह्ँमा२३४हायि। सा३। स्वग्मा२३४हायि। उदँवग्मा
३ २ ३ ५ १ र ३ २ ३
२। तऊदा२३४भायिः ॥(१) वार्णत्वार्२। यवीया२३४
५ १ ३ २ ३ ५ ५ २ ३
भीः। वर्द्धन्तिपूर्२। रव्राँह्मा२३४णी। वा३। वृध्वा
५ १ ३ २ ३ ५
२३४९साम्। चिदद्रिवोर्२। दिवँदा२३४यिवायि ॥(२)
१ ३र २ ३ ५ १ र
युञ्जन्ति हार्२। रीश्राँयिषा२३४यिरा। स्वगाथया२।
३ २ ३ ५ १ ३ २ ३ ५ १
उरौरा२३४थायि। उरुयुगेर्२। वचोयू२३४जा। इन्द्र
र ३ २ ३ ५ २ ५ २ ५
वाहार्२। सुवर्षा२३४यिदा। हा३। ओ३हा३। ओ
२ २ ५र र १ २ १ १
३ हा ३। हा ३ ४। औहोवा। आ औ ३ हो २ ३
१ १
४ ५ ॥ ८ * ॥ [२] २३

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य

षष्ठः खण्डः † ।

---

* ऊ० गा० १०प्र० १ख० ८सा० ।

† 'अग्निष्टोम उक्थ्यश्चोक्तः। षोडशी च अ.ग्रन्थ-समाम्नायेन ऋक्-समाम्नायेन चाम्नातः। इहाग्नौ नातिरात्रो वाजपेयः'—इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १ ॥

॥ इत्युत्तरार्च्चिके प्रथमस्यार्द्ध-प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्क-भूपाल-साम्राज्य-धूरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे प्रथमोऽध्यायः* ॥



* मूले त्वर्द्धप्रपाठकः समाप्तः, नतु प्रपाठकः; विवरणग्रन्थेऽपि तथैव ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे, तमहं वन्दे विद्यातीर्थं-महेश्वरम् ॥ १ ॥

## ॥ अथ द्वितीयाध्याय आरभ्यते ॥



तत्र,

पान्तमाव इति प्रथम-खण्डे—

त्र्यृचात्मके प्रथमे सूक्ते,

प्रथमा ।

२ २ २ ३ १ २ ३ ' २ ३ १र २र
पान्तमावोअन्धसइन्द्रमभिप्रगायत ।
२ १ २ ३१२११ २ ३ २
विश्वासाहꣳशतक्रतुम्मꣳहिष्ठञ्चर्षणीनाम् ॥ १* ॥

हे ऋत्विजः ! "वः" युष्मदीयं "अन्धसः" सोमलक्षणमन्नं "आ पान्तम्" आभिमुख्येन पिबन्तं [पा पाने (भ्वा० प०); छान्दसः शपोलुक् (२, ४, ७३); 'सर्वे विधयश्छन्दसि विकल्पन्ते'—इति "न लोकाव्यय (२, ३, ६९)"—इति षष्ठी प्रतिषेधाभावः; ततोऽन्धस इत्यस्य "कर्त्तृकर्मणोः (२, ३,

* छ० आ० २, २, २, १ (१ भा० १५५ पृ०) = ऋ० वे० ६, ६, १५, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



६५)"—इति षष्ठी। षष्ठी] सोम माभिमुख्येन पिबन्त मेतादृशम् "इन्द्रम्" "अभि प्रगायत" प्रकर्षेण अभिष्टुत। कीदृशम्? "विश्वासाहं" सर्वेषां शत्रूणामभिभवितारं सर्वेषां भूतजातानां वा, अतएव "शतक्रतुं" बहुविधप्रज्ञानं बहुविधकर्माणं वा "चर्षणीनां" मनुष्याणां "मंहिष्ठं" धनस्य दातृतमम्। यद्वा, यजमानानां यष्टव्यत्वेन पूजनीय मिन्द्रं प्रगायतेत्यर्थः॥ १॥

अथ द्वितीया।

३ १२ ३१२ ३ २ १२
पुरुहूतम्पुरुष्टुतङ्गाथान्याऽ३ऽ१सनश्रुतम्।
२ ३१ २
इन्द्रइतिब्रवीतन॥२*॥

हे ऋत्विग्यजमानाः! "पुरुहूतं" यज्ञेषु बहुभि राहूतं "पुरुष्टुतं" बहुभिः स्तोत्रशस्त्रादिभिः स्तुत मतएव "गाथान्यं" गानयोग्यं गातव्यं† "सनश्रुतं" सनातनया प्रसिद्धम्,‡ एवंविधं देवम् "इन्द्रइति" यूयं "ब्रवीतन" ब्रवीध्वम् ['ब्रूञ् व्यक्तायां वाचि (अदा० उ०)'—इत्यस्य लङि व्यत्ययेन (३, ४, ८८) ध्वमस्तनबादेशः, अतएव गुणः॥ २॥

* ऋ० सं० ६, ६, १५, २।

† 'गाथानि स्तोत्र-शस्त्र-मन्त्राणि, ताभिः नीयते यः स गाथान्यः तं गाथान्यम्'—इति वि०।

‡ 'सनश्रुत्: सदावाचो, सदैव विश्रुतम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

२ ३ १ २ ३१ १ ३१र २र ३२
इन्द्रइन्नोमहोनान्दातावाजानान्नृतुः।
३१ २ ३ १ २
महाᳬअभिज्ञ्वायमत् ॥ ३* ॥ १

"इन्द्रइत्" पूर्वोक्तलक्षण इन्द्रएव "नः" अस्मभ्यं "महोनां" मघोनां धनवतां पश्वादि-लक्षण-धन-युक्तानां "वाजानाम्" अन्नानां "दाता" भवतु। कीदृशम्? "नृतुः" ["नृतिशृध्योःक्रूः"—इति क्रूप्रत्ययः, ह्रस्वश्छान्दसः] सर्वस्य नर्त्तयिता†; यद्वा [नृ नये, (क्र्या० प्वा० प०) औणादिक-तु-प्रत्ययः, धातो-र्ह्रस्वश्छान्दसः] स्तोतृभ्यो गवादिनेता; अतएव "महान्" स इन्द्रः "अभिज्ञु" अभिगत-जानुकम्‡ अस्मभ्यम् "आ यम त्" आयच्छतु ददातु¶। यद्वा स इन्द्रः अभिज्ञु अस्मदभिमुख मागच्छत धनं स्वहस्तयोः परिगृह्य अस्मान् नयतु,—धनं गृहीत्वा अस्मभ्यं ददात्वित्यर्थः ॥

"मघोनाम्"-"महोनाम्"—इति पाठौ ॥ ३ ॥ १

२ ४ २
॥ वैतहव्यमोकोनिधनम् ॥ पा ऽ५न्तम्। आ३वो
४ ५ १र ० ३ ५ १
३अन्धसाः। आइन्द्रामभाइ। प्रगार्२या र्२३४ता। विश्वा

* ऋ० वे० ६, ६, १५, ३।

† 'नृतुः नृभ्योहितः'—इति वि०।

‡ 'अभिज्ञु सर्वस्य ज्ञाता'—इति वि०।

¶ 'आयमत्—यमु बन्धने, सर्वं जगत् कर्मभवैः पाशैर्बध्नाति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २ १ २ २ १ २ १ २
२सार२३४हाम्। श्रा३ताक्रा३त्वम्। मᳲहिष्ठञ्चर्ष
१ २ ५र र ३ र ४ २
णाइ। ना२मार२३४औहोवा॥(१) पू५पूरुह्र। ता३म्पू३
४ ५ १ र ७ ३ ५ १र
रुष्टुताम्। पूरुह्रताम्। पुरुरुष्टू२३४ताम्। गाथा
२ ५ २ १ २ २ १ २ १ २ १
२ना२३४याम्। सा३नाश्रू३ताम्। श्राइन्द्रइतिब्र। वा
२ ५र र ३ ४
इ। ता२ना२३४औहोवा॥(२) आ५पुइन्द्रइत्। नो३
२ ४ ५ १ ३ ५ १र
मा३होनाम्। आइन्द्रइन्नो। मा२हो२३४नाम्। दा
२ ५ २ २ २ १ २र १ २ १र
ता२वा२३४जा। ना३१न्ना३र्त्तूः। माहाᳲअभिज्ञु। आ।
२ ५र र २ १११
या२मा२३४औहोवा। श्रो३कार३४५ः॥ १८*॥ [१] १

अथ द्वितीयद्वचे, प्रथमा।

२३१२ ३१ २३ १२
प्रवइन्द्रायमादनᳲहर्यश्वायगायत।

१२ ३१२
सखायःसोमपाव्ने॥ १†॥

---

* ऊ० गा० १प्र० १ख० १८साम।

† ऋ० मा० २, २, २, २ (१भा० ३५८पृ०)=ऋ० वे० ५, ९, १५, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "सखायः" स्तोतारः! "वः" यूयं "हर्यश्वाय" हरिनामकाश्वोपेताय "सोमपाव्ने" सोमानां पात्रे "मादनं" मदकरं हर्षकरं स्तोत्रं प्रगायत ॥ १ ॥

अथ द्वितीया ।

२उ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
शꣳसेदुक्थꣳसुदानवउतद्युक्षंयथानरः ।
३ ० ३ १ २
चकृमासत्यराधसे ॥ २* ॥

"उत" अपिच हे स्तोतः! "सुदानवे" शोभन-दानाय "सत्यराधसे" सत्यधनायेन्द्राय† "उक्थं" स्तोमं‡ "यथा नरः" अन्ये स्तोतारः¶ "द्युक्षं" दीप्तेः साधनभूतं स्तोत्रं शंसति, तद्वत् त्वमपि "शंस" उच्चारय। इदिति पूरणः§। वयमपि "चकृम" स्तोत्रं करवाम ॥ २ ॥

---

* ऋ० वे० ५, ३, १५, २ ।

† 'सत्यराधसे—राधः अन्नं धनं वा, सत्यं वा। सत्यान्नाय, सत्यधनाय, सत्यस्त्याय वा'—इति वि० ।

‡ 'उक्थं—उक्थानि सामानि, हे उद्गातः! गायस्व सामानि। अथवा उक्थं शस्त्रमुच्यते तच्छंस होतः! एकवचनं जात्यपेक्षम्, उक्थजातिं शंस।'—इति वि०।

¶ 'यथा नरः—यथा मनुष्याः। प्रथमैषा षष्ठीस्थाने द्रष्टव्या यथा मनुष्यस्य स्तुतिः क्रियते'—इति वि० ।

§ "अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्य-पूरणा आगच्छन्ति पद-पूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति"—इति निरु० नै० १, ९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ १२उ ३ १ २
त्वन्नइन्द्र वाजयुस्त्वङ्गव्युःशतक्रतो।

१ २ ३ १२
त्वꣳहिरण्ययुर्वसो॥ ३ *॥ २ †

हे "इन्द्र!" "त्वं" "नः" अस्माकं "वाजयुः" अन्नकामो भव। हे "शतक्रतो" बहुविध-कर्म्मवन्निन्द्र! ‡ "त्वं" "नः" अस्माकं "गव्युः" गोकामो भव। हे "वसो" वासयितरिन्द्र! त्वं "हिरण्ययुः" हिरण्यकामोऽपि भव। ["छन्दसि परेच्छायामपि दृश्यते (वा० ३, ३, ८)"—इति क्यच्॥ ३॥ ३

१ ३२२ ५ १
॥ शात्यम्॥ प्रवइन्द्रा२। यमादा२३४नाम्। प्रवा

१ २ २ ३ ५ २ २
२इन्द्रा। औ३हो। या२३४मा। दा३नाम्। हरा

१ २ २ ३ ५ २ २
२अश्वा। औ३हो। या२३४गा। या३ना। सखा२

१ २ २ १ ५ ४ ५
यासो। औ३हो३। मायो२३४वा। आऽ५वो६हा

१ २ ३२२ ५ २
इ॥(१) शꣳसीदुक्था२म्। सुदाना२३४वाइ। शꣳसा

---

* ऋ० वे० ५, ३, १५, ३।

† 'गौरीवितेः सदेषार्षम्'—इति वि०।

‡ 'शतक्रतो—बहुभिः क्रतुभिरिष्टवान् यः स शतक्रतुः। अथवा क्रतुरिति कर्मनाम प्रज्ञानाम वा, बहुकर्म्मा बहुप्रज्ञो वा'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ ३ ५ २ २
२इदुक्था। औ३होइ। स्तू२३४हा। ना३वाइ। उ

१ २ २ ३ ५ २ २ २
ता२द्युत्ता। औ३होइ। या२३४था। मा३राः। च

१ २ २ १ ५ ४ ५
क्रम। सा। औ३होइ। त्यारो२३४वा। धा५सोइहा

१ २ २ २ ५ २ १
इ॥(२) तुवन्नआ२इ। इवाजा२३४यूः। तुवा२न्नआ।

१ २ ३ ५ २ २ १ २
औ३होइ। द्रा२३४वा। जा३यूः। तुवा२ङ्व्यूः। औ

२ ३ ५ २ २ १ २
३होइ। ग्रा२३४त। क्रा३ताउ। तुवा२र्हिरा। औ

२ १ ५ ४ ५
३होइ। त्यायो२३४वा। वा५सोइहाइ(३)॥१८*॥[१]२

अथ तृतीयर्चे, प्रथमा।

३१२ ३ १२३१ २३ २३ १२
वयमुत्वातदिदर्थाइन्द्रत्वायन्तःसखायः।

१२ ३२ ३१२
कण्वाउक्थेभिर्जरन्ते॥१†॥

हे "इन्द्र!" "त्वायन्तः" त्वामात्मनइच्छन्तः "सखायः" समानख्याना वयं "तदिदर्थाः" यद्विषयं स्तोत्रं तत्तदित्, तदेवार्थः

---

* ऊ० गा० १प्र० १ख० १८सा०।

† ऋ० आ० २, २, २, २ (१भा० ८३० पृ०)=ऋ० वे० ५, ७, २०, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रयोजनं येषां ; तादृशाः सन्तः "त्वा" त्वां "जरामहे" स्तुमहे । "उ"—इति पूरणः । "कण्वाः" कण्वगोत्रोत्पन्नाः अस्मदीयाः पुत्रादयश्च "उक्थेभिः" उक्थैः शस्त्रैः "जरन्ते" त्वां स्तुवन्ति ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १र २र ३ १ २ ३ २ ३ १ २
नघेमन्यदापपनवज्रिन्नपसोनविष्टौ ।
२उ ३र १ २
तवेदुस्तोमैश्चिकेत ॥ २ * ॥

हे "वज्रिन्" वज्रवन्निन्द्र ! "अपसः" अपस्विनः कर्म्मवतः† "तव" सम्बन्धिनि‡ "नविष्टौ" अभिनवे यागे वर्त्तमानोऽहं "अन्यत्" त्वद्विषयादन्यत् स्तोत्रं 'नघेम्"¶ नैव "आपपन" अभिष्टौमि [ पनतेः स्तुतिकर्म्मणः ( भ्वा० आ० ) उत्तमे णलि रूपम् ] ; "तवेदु" तवैव "स्तोमैः"§ स्तोमं स्तोत्रं "चिकेत" अभि जानामि ‖ त्वामेव सर्वदा स्तौमीत्यर्थः ॥ २ ॥

---

* ऋ० वे० ५, ७, २०, २ ।

† "अपस्"—इति कर्मनामसु प्रथमं नैघण्टुकम् ( २, १, १ ) ।

‡ 'तव—षष्ठी वा द्वितीयार्थे द्रष्टव्या त्वां ० ० ० चिकेत'—इति वि० ।

¶ 'न, घ, ईम—इति त्रयोऽप्येते उपसर्गाः'—इति वि० ।

§ 'स्तोमैः—क्रतुभिः—इति वि० ।

‖ 'चिकेत—चेतनां कुर्म्मः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

३ १ २ ३ २ ३ २ ३ १र २र
इच्छन्तिदेवाःसुन्वन्तन्नस्वप्नायस्पृहयन्ति ।
१ २ ३ २ ३ १ २
यन्तिप्रमादमतन्द्राः ॥ २ * ॥ ३ †

"सुन्वन्तं" सोमाभिषवं कुर्वन्तं यजमानं "देवाः" इन्द्रादयः सर्वे "इच्छन्ति" रक्षितुम्, "स्वप्नाय न स्पृहयन्ति" स्वप्नावस्थान्तस्य सुन्वतो नेच्छन्ति सर्वदा प्रबुद्धमेव कुर्वन्तीत्यर्थः ["स्पृहेरीप्सितः (१, ४, ३६ )"—इति कर्म्मणि चतुर्थी ; स्पृहईप्सायां चुरादि रदन्तः]। यतएव मतः कारणात् "अतन्द्राः" अनलसा देवाः "प्रमादं" प्रकर्षेण मदकरं‡ तदीयं सोमं "यन्ति" शीघ्रं प्राप्नुवन्ति ॥ २ ॥ ३

५ २ ४र ५ १र
॥ काण्वम् ॥ वयमू३त्त्वातदिदर्थाः । ऐहिहा२
१ र र र २ १ २ ३
इ । वयमुत्वातदिदर्थाइन्द्रत्वायन्तःसखार३याः । का२
५ १ २ १ ५ २
३४ण्वाः । ऊ । क्थाइ । भिज्जौ२३४वा । रन्ता३या
१ ११ १ ५ र २ ४ र ५ १र १र
२३४५ ॥(१) नघेमा३न्यदापपना । ऐहिहा२इ । नघे

---

* ऋ० वे० ५, ७, १०, ३ ।

† 'अथ काण्वं साम । कण्वस्यार्षम्'—इति वि० ।

‡ 'प्रमादं—मदमोदतृप्तावित्यस्येदं रूपम् । प्रकर्षेण मदम्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र २१ २ २ ५
मन्यदापपनवज्रिन्नपसोनवार३इ्ष्टाउ। तार३४वेत्।
१ र २र१ ५ २र १ १ १ १
ऊ। स्तो। मैश्वोर३४वा। क्रेता३या२३४५ ॥(२)
५ २ ४र र ५ १र १ र र
इच्छन्ता३इदेवाःसुन्वन्ताम्। ऐहिहा२इ। इच्छन्तिदेवाः
र २१ २ ३ ५ १ र
सुन्वन्तन्नस्वप्नायस्पृहया२३न्तो। या२३४न्तो। प्रा। मा।
२१ ५ २ १ १ १ १
दमो२३४वा। तन्द्रा३या२३४५(३) ॥ २० * ॥ [१] ३

अथ चतुर्थर्चे, प्रथमा।

१ १ ३१२ ३१र २र ३ १र
इन्द्रायमद्वनेसुतम्परिष्टोभन्तुनोगिरः।
३१२ २ १२
अर्कमर्चन्तुकारवः ॥ १ † ॥

"मद्वने" [माद्यतेः (दि०, प०) क्वनिप्] मदनशीलाय "इन्द्राय" तदर्थं "सुतं" सोमं "नः" अस्मदीयाः "गिरः" स्तुतिलक्षणा वाचः परिष्टोभन्तु [स्तोभतिः स्तुतिकर्म्मा (निघ० ३, १४, ४)] सोमं स्तुवन्तु। ततः "कारवः" स्तुतिकारिणः स्तोतारश्च "अर्कं" सर्वैरर्चनीयं सोमम् "अर्चन्तु" पूजयन्तु ॥ १ ॥

---

* ऊ० गा० १प्र० १ख० २० सा०।

† छ० आ० २, १, २, ४ (१भा० ३६२ पृ०)—ऋ० वे० ६, ६, १८, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ २ २ १ ३ २ १ १ २ ३ २ ३ १ २
यस्मिन्विश्वा अधिश्रियोरणन्तिसप्तसꣳसदः।

१ २ ३ २ २
इन्द्रꣳसुतेहवामहे ॥ २ * ॥

"यस्मिन्" इन्द्रे "विश्वाः" सर्वाः "श्रियः" कान्तयः "अधि" अधिकं भवन्ति अतिशयेन तेजस्वीत्यर्थः† । किञ्च "सप्त" सप्तसङ्ख्याकाः "संसदः" सम्यग् यज्ञेषु कर्म्मकरणार्थं सीदन्तीति संसदो होत्रकाः‡ यस्मिन् "रणन्ति" सोमप्रदानार्थं रमन्ते; यद्वा यं शब्दयन्ति स्तुवन्ति तं पूर्वोक्तलक्षणम् "इन्द्रं" "सुते" सोमेऽभिषुते सति "हवामहे" वयं सोमपानायाह्वयामः ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
त्रिकद्रुकेषुचेतनन्देवासोयज्ञमत्नत।

१ २र १ १२
तमिद्वर्द्धन्तुनोगिरः ॥ ३ ¶ ॥ ४ §

---

* ऋ० वे० ६, ६, १८, ५।

† 'अधिश्रियः—ये अधिश्रिताः मनुजाः'—इति वि०।

‡ 'सप्तसंसदः—सप्तर्त्विजः; यथा उद्गातारः, होता, मैत्रावरुणः, ब्राह्मणाच्छंसि, अच्छावाकः—एते ऋत्विजः'—इति वि०।

¶ ऋ० वे० ६, ६, १९, १।

§ 'अत्र श्रौतकक्षं साम'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"देवासः" देवाः इन्द्रादयः "त्रिकद्रुकेषु" आभिप्लविकेष्वहःसु ज्योतिर्गौरायुरिति त्रिकद्रुकाः, * तेषु "चेतनं" [ चिती सञ्ज्ञाने (भ्वा०, प०) ] चेतन्ति जानन्ति अनेन स्वर्गादिकमिति चेतनो ज्ञानसाधनो यज्ञः तम् "अतत" अतन्वत स्वैः स्वैः कर्म्मभिः पालनैश्च विस्तारितवन्तः [ तनु विस्तारे (तना०, उ०) लङि "बहुलं छन्दसि (२, ४, ७३)"—इति विकरणस्य लुक्, "तनिपत्योश्छन्दसि (६, ४, ९९)"—इति उपधालोपः "तमित्" तमेव यज्ञं "नः" अस्माकं "गिरः" स्तुतिलक्षणा वाचः "वर्द्धन्तु" वर्द्धयन्तु ॥ ३ ॥ ४

१ र २ १ २र १ २ र १ २
॥ श्रौतकक्षम् ॥ इन्द्रायमद्वनेसुतम्। इन्द्रायमोवा।
१ २ २ १ २र १ २ २
द्वा३नायिस्ह३ताम्। परिष्टो। भा२३। द्वा३द्वा३।
१ २ ५ १ २ २ २ १र
ट्नोरगार२३४इराः। आमञ्चर्को३। हा३हा। तुका
२ १ २ १र २ १ २ १
रा२३वा३४३ः ॥(१) यस्मिन्विश्वाअधिश्रियः। यस्मिन्विश्वो

---

* ज्योतिर्गौरायुरितीति चतुर्थ-पञ्चम-षष्ठाना माभिप्लविकाना मह्नां नाम्नां प्रतीकमात्रम्। अस्ति गवामयनादिकं सत्रम्; तच्च, एकषष्ट्युत्तरत्रिशततदिननिर्वर्त्यं भवति। तत्र, प्रायणीयोऽतिरात्रनाम प्रथममहः, चतुर्विंशनाम द्वितीयमहः, उक्थ्यनाम तृतीयम्, ज्योतिर्गौः चतुर्थमहः, आयुर्गौः पञ्चममहः, आयुर्ज्योतिरितिनामकं षष्ठमहः, एतान्येव षडहानि आभिप्लविकान्युच्यन्ते; तेष्वेषु शेषाण्यहानि चतुर्थादीनि त्रीणि त्रिकद्रुकाणीति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २ १ २ १ २ १
वा। आ३धायिआ३याः। रणन्ति। सा२३। हा३हा

१ २ ५ १ २ १ १
३। प्रासा२ॱसा२३४दाः। आइन्द्र२ॱसुते३। हा३हा

१र २ १ २र १र२
यि। हवामा२३हा३४३यि॥(२) त्रिकद्रुकेषुचेतनम्*।

१ १ २ १ २ २ १रर २ १
त्रि†कद्रुकोवा। षू३चायिता३नाम्। देवासः। या२३।

२ २ १ ३ ५ १ २ २
हा३हा३। ज्ञामा२त्ना२३४ता। तामिदर्द्धा३। हा३

२ १र २ १
हा। तुनोगा२३यिरा३४३ः। ओ२३४५इ। डा(३)॥१‡॥[१]४

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

प्रथमः ¶ खण्डः॥ १॥

---

*, † "त्रि"—इति ख० पु० पाठः।

‡ ऊ० गा० २प्र० १ख० १सा०।

¶ 'उक्तः प्रथमवर्ग्यायः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीयखण्डस्य*—

प्रथम-तृचे, प्रथमा ।

२ १ २ ३ २ ३ १ २ ३ १ २ १ १ २
अयन्तइन्द्रसोमोनिपूतोअधिबर्हिषि ।
१ २ ३ १उ २ १ २
एहीमस्यद्रवापिब ॥ १ † ॥

हे "इन्द्र!" "ते" तुभ्यं त्वदर्थम् "अयं सोमः" "बर्हिषि अधि" वेद्यामास्तीर्णे दर्भे "निपूतः" नितरां दशापवित्रेण शोधितः अभिषवादिसंस्कारैः संस्कृत इत्यर्थः । "ईम्" इदानीम् "अस्य" इमं सोमं प्रति "एहि" आगच्छ । आगत्य च यत्र रसात्मकः सोमो हूयते तं देशं "परिद्रव" शीघ्रं गच्छ, तदनन्तरं सोमं "पिब" ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र ३ २
शाचिगोशाचिपूजनायꣳरणायतेसुतः ।
१ २ ३ १ २
आखण्डलप्रहूयसे ॥ २‡ ॥

"शाचिगो" [शाचयः शक्ता गावो यस्यासौ शाचिगुः; यद्वा, शच् व्यक्तायां वाचि (भ्वा०,आ०), अस्मादौणादिक इञ् प्रत्ययः]

* 'इदानीं मध्यमोऽभिधीयते'—इति वि०।

† उ० आ० २, १; २, ५ (१भा० ३६५पृ०)=ऋ० वे० ८, १, १७, १।

‡ ऋ० वे० ८, १, २४, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ग्राघयः व्यक्ताः प्रख्याता गावो रश्मयो वा यस्य तादृश ! * हे "ग्राविपूजन" [ पूज्यतेऽनेनेति पूजनम् ] स्तोत्रादि-प्रख्यात-पूजन ! † "ते" तव "रणाय" रमणाय सुखजननाय "अयं" सोमः "सुतः" अभिषुतः ; अतः कारणात् हे "आखण्डल" शत्रूणामाखण्डयितः इन्द्र ! ‡ "प्रह्वयसे" प्रकृष्टाभिः स्तुतिभि-राह्वयसे। इत आगत्य इमं सोमं पिबेत्यर्थः ॥ २ ॥

अथ तृतीया।

१ २　　　३ १ २　　　३ १ २
यस्ते शृङ्गवृषोणपात्प्रणपात्कुण्डपाय्यः।
२र　　३ १र　२र
न्यस्मिन्दध्र आमनः ॥ ३ ¶ ॥ ५ §

हे "शृङ्गवृषोणपात्" [ शृङ्गवृषनामा कश्चित् ऋषिः तस्य चेन्द्रः स्वयमेव पुत्रतया जज्ञे—इत्याख्यायिका। नपादित्य-पत्यनाम ] हे शृङ्गवृष-पुत्र ! [शृणन्ति हिंसन्तीति शृङ्गाणि-रश्मयः, तैर्वर्षतीति शृङ्गवृड़ादित्यः, तस्य न पातयितः स्वकीये ऽवस्थानेऽवस्थापयितः ! । "सुबामन्त्रिते (२, १, २)"—इति षष्ठ्यन्तस्य पराङ्गवद्भावेनामन्त्रितानुप्रवेशात् समुदायस्याष्टमिकं

* 'अघोति कर्मनाम, कर्मणि प्रयुक्ता गावः प्रदीयन्ते यस्य असौ ग्राघिगुः'—इति वि०।

† 'ग्राविपूजनः—कर्मणि पूज्यते ग्राविपूजनः'—इति वि०।

‡ 'आखण्डलः—इन्द्रस्य नामैतत्'—इति वि०।

¶ ऋ० वे० ६, १, २४, ३।

§ 'यम देवोदासीर्दू सम्नो। दैवोदासमह्योने, चौर्दू सद्मनं सने रकारे।—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सर्वानुदात्तत्वम्। ईदृग! ] हे इन्द्र! "ते" तव सम्बन्धि "प्रणपात्" प्रकर्षेण नपातयिता रचिता, "कुण्डपाय्यः" [कुण्डैः पीयते अस्मिन् सोम इति कुण्डपाय्यः क्रतुविशेषः। "क्रतौ कुण्डपाय्य-सञ्चाय्यौ (३, १, १३०)"—इति पिबतेरधिकरणे यत्-प्रत्ययो युगागमश्च निपात्यते—एतत्सञ्ज्ञो यः] क्रतुरस्ति; "अस्मिन्" कुण्डपाय्य-क्रतौ "मनः" स्वान्त "आ नि दध्रे" अभितो वर्द्धमानाः कुण्डपायिनामान ऋषयः पुरा निदधिरे सम्यक् त्वद्दैवत्यं क्रतुमनुष्ठितवन्त इत्यर्थः। [ दधातेर्लिटि "इरयोरे ( ६, ४, ७६)"—इति रे-भावः* ॥ ३ ॥ ५

४ ३ ४ ३ ५ १
॥ रात्रिर्दैवोदासम्† ॥ अयन्तइन्द्रसोऽ४मः। नार३
२५र ४ ५ ४५ १ र र २ १ २
४यि। पूतोअधिबर्हिषी। निपूतोअधिबर्ह्हा २ ३ यिषी।
र १ १ १र १र ४
ऐहोयिमार२३स्या। द्रवापार३४५यिबा६५६ ॥(१) ग्राचि
र ३र ४५र १ २ १ ५र र ४ ५
गोग्राचिपू। जना३। आ२३४। यद्दूरणायतेसुताः।

* अत्रैवं व्याचष्टे विवरणकार-माधवः—"यः" "ते" तव हे सोम! "नपात्" न पिबति तस्य वृथा जन्म; "प्रणपात्" प्रणिपत्य श्रद्धया पातव्यः। "कुण्डपाय्यः" अत्र कुण्डाश्चमसाः कुण्डप्रतिरूपाः तैः पीयते कुण्डपाय्यः। अथवैतानीन्द्र-विशेषणानि। ऋक्वान् एषः प्रधानभूतो गौः, तादृश इन्द्रः; तस्य यः प्रकर्षेण सोमपानं कल्पयति कुण्डाकारैश्चमसैरितरैश्च। नि अस्मिन् दध्रे, नि-शब्दो न-शब्दस्यार्थे द्रष्टव्यः; न अस्मिन् यजमाने दध्रे धारयति इन्द्रः आत्मीयं मनः अनुग्रहाय?"—इति।

† 'रात्रीश्चवद्दैवोदासम्'—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२१ र २१र २ र १ २ १र
अयꣳरणायतेस्व२३ताः। आखण्डा२३ला। प्रहूया२३४५

३४र ५ ३२ १
सा६५६यि॥(२) यस्तिग्मशृङ्गवृषः। नपा३त। प्रा२३४।

५र र ४५ १ र २१र २ १
णपात्कुण्डपायियाः। प्रणपात्कुण्डपाया२३याः। निय

२ १र २
स्मा२३यिन्दा। ध्वआमा२३४५ना६५६ः। ई२

५
३४दा(३)॥२*॥ [१]

२१ २ १र२ १ २
॥ और्ध्वसद्मनम्॥ अयन्तइन्द्रसोमः। उवाहायि।

१रर १ रर
निपूतोअधिबर्हिष्युवा२३होयि। निपूतोअधिबर्हिष्यूवा२३

१ २र १ २३
होयि। आयिहोमस्या। द्रावापा२३४५यिना६५६॥(१)

१र १र१र २र १ १ १ र र
प्राचिगोप्राचिपूजन। उवाहायि। अयꣳरणायतेसुत

१ २१ २१
उवा२३होयि। (वार२)। आखण्डला। प्राहूया२३४५

१र२ र र १ २ १
सा६५६यि॥(२) यस्तिग्मशृङ्गवृषोणपात्। उवाहायि। प्रण

र र १ २ १
पात्कुण्डपाय्युवा२३होयि। (वार२)। नायस्मिन्दा।

* ऊ० गा० १प्र० २ख० १सा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २                  २ १ २ १र २ १ १ २
भ्राभ्रामा२३४५ना६५६ः। सुवृक्तिभिर्नमादनम्भरे२शुवा
१ऽ(३) ॥ २ * ॥ [२] ५

अथ द्वितीयतृचे, प्रथमा।

१र २र २ १ २ ३ २ १ १र २र
आतूनइन्द्रक्षुमन्तञ्चित्रङ्ग्राभंसङ्गृभाय।
३ २र २र
महाहस्तीदक्षिणेन॥ १ † ॥

हे "इन्द्र!" त्वं "महाहस्ती" महाहस्तवान्, तदानीमेव "नः" अस्मदर्थं "क्षुमन्तं" शब्दवन्तं स्तुत्यमित्यर्थः। "चित्रं" चायनीयं "ग्राभं" ग्राहकं ग्रहणार्हं वा धनं "दक्षिणेन" हस्तेन "तु" क्षिप्रं "आ सङ्गृभाय" आभिमुख्येन सङ्गृहाण॥ १॥

अथ द्वितीया।

१ २र २र ३ २ १ १ २ ३ २ १
विद्माहित्वातुविकूर्मिन्तुविदेष्णन्तुवीमघम्।
२ १र २र
तुविमात्रमवोभिः॥ २‡ ॥

---

* ऊ॰ गा॰ १प्र॰ २अ॰ ३सा०।

† ऐ॰ आ॰ २, २, ६, ३ ( १भा॰ ३०८ पृ॰ )=ऋ॰ वे॰ ६, ५, २७, १।

‡ ऋ॰ वे॰ ६, ५, २७, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे इन्द्र! "त्वा" त्वां "विद्म हि" जानीमः खलु। कीदृशम्?—इति, "तुविकूर्म्मिं" बहुकर्म्माणं, * "तुविदेष्णं" बहुप्रदेयं, † "तुविमघं" बहुधनं "तुविमात्रं" बहुप्रमाणम् "अवोभिः" रक्षणैर्युक्तम्॥ २॥

अथ तृतीया।

१ २र ३ १र २र ३ १ २
नहित्वाशूरदेवानमर्त्तासोदित्सन्तम्।

१ २उ ३ १ २
भीमन्नगांवारयन्ते॥ ३ ‡॥ ६¶

हे "शूर!" "दित्सन्तं" दातुमिच्छन्तं "त्वा" त्वां "देवाः" "न हि वारयन्ते" न निवारयन्ति खलु; तथा "मर्त्तासः" मनुष्या अपि न वारयन्ते "भीमं न गां" भयजनकं दृप्तं वृषभं यवसे प्रवृत्तमिव, तं यथा वारयितुं न शक्नुवन्ति तद्वत्॥ ३॥ ६

१र र २ १ २ २
॥ आकूपारम्§॥ आहूनद्द। द्रत्तुमा३न्साम्। चि

---

* 'तुविकूर्म्मिं' तुविशब्दो बहुवाची, कूर्म्मिशब्दो मनुष्यवाची कर्म्मवाची वा इति वि०। "तुवि"—इति निघण्टौ बहुनामसु द्वितीयं पदम् (३, १)। कूर्म्मिशब्दस्तु मनुष्यनामसु कर्म्मनामसु वा पठितो न दृश्यते।

† 'तुविदेष्णं—देष्णं दानं बहुदानम्—इति वि०।

‡ ऋ० वे० ६, ५, ३७, २।

¶ 'अथाकूपारं साम। आकूपाराङ्गिरसी गोधा च आर्षम्'—इति वि०।

§ 'राय्याकूपारम्'—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र १ २ १ र २
चङ्ग्राभꣳसङ्गृभा२या। चित्रङ्ग्राभꣳसम्। गृ। औ३

२ १ ५ २र १ र र १
होयि। भा२३४या। ऐहोयि। महाहस्तीदक्षा२३हो

१र १ ३र ५ ४ ५
यि। औहो। वाहो२३४वा। णा५यिनोई६हायि॥(१)

२ १र र २ २ १र र १
विद्माहित्वातुवि। कूरमीम्। तुविदेष्णन्तुवीमा२घाम्।

२ १ र २ २ ३ ५
तुविदेष्णन्तु। वा। औ३होयि। मा२३४घाम्। ऐ

१ र १ २र १ १र
होयि। तुविमात्रमा२३होयि। औहो। वाहो२३

५ ४ ५ १ र र २
४वा। वो५भोई६हायि॥(२) नहित्वाशूर। दा३यि

२ १ र र १ र २
वाः। नमर्त्तासोदित्सा२न्ताम्। नमर्त्तासः। दा। औ

२ ३ ५ २र १ र र २
३होयि। त्सा२३४न्ताम्। ऐहोयि। भीमन्नगांवारा२

१ २र १ १र ५ ४
३होयि। औहो। वाहो२३४वा। या५न्तो६

५
हायि(३)॥ ४ *॥ [१] ६

---

* ऊ० गा० १प्र० २ख० ४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीयतृचे, प्रथमा।

२ १ १ ३१२ ३ १ १ ३ १ २
अभित्वावृषभासुतेसुतꣳसृजामिपीतये।
२ १ १ ३ १ २
तृम्पाव्यश्नुहीमदम्॥ १ *॥

हे "वृषभ" हे इन्द्र! "त्वा" त्वां "सुते" सोमेऽभिषुते सति "सुतम्" अभिषुतं सोमं "पीतये" पानाय "अभिसृजामि"। "तृम्प" तृप्य। "मदं" मदकरं सोमं "व्यश्नुहि" च॥१॥

अथ द्वितीया।

१ २ २ १ २ ३ २ ३ २ ३ २ २ ३ १ २
मात्वामूराअविष्यवोमोपहस्वानआदभन्।
१ २ ३ १ २
माकीं ब्रह्मद्विषंवनः॥ २ †॥

हे इन्द्र। "त्वा" त्वां "मूराः" मूर्खा मूढाः, मनुष्याणाम्‡ "अविष्यवः पालनकामाः "मा दभन्" मा हिंसन्तु। "उपहस्वानः" उपहसनपराश्च "मा" भवन्तु। "ब्रह्मद्विषं" ब्राह्मणानां द्वेष्टारं "मा कीं वनः" मा भजेथाः ¶॥

"ब्रह्मद्विषं"-"ब्रह्मद्विषः"—इति पाठौ॥ २॥

* छ० आ० २, २, २, ७ (१भा० ३३८ पृ०)=ऋ० वे० ६, ३, ४६, १।

† ऋ० वे० ६, ३, ४६, २।   ‡ आत्मपरिवारमाणामिति भावः।

¶ 'वनः'—यद्यपि वनतिः स्तुति-कर्मा तथाप्यत्र सम्भजने द्रष्टव्यः; मा यष्टेन सम्भज्यताम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

३ २ ३ १ २ ३ १ २ ३ १ २
इहत्वागोपरीणसम्महेमन्दन्तुराधसे ।

१ २ ३ १र २र
सरोगौरोयथापिब ॥ ३ * ॥ ७ †

हे इन्द्र ! "त्वा" त्वाम् "इह" अस्मिन् यज्ञे "गोपरीणसं" गव्येन पयसा सम्मिश्रं सोमं ‡ "महे" महते "राधसे" धनाय ¶ "मन्दन्तु" मनुष्या मादयन्तु । त्वञ्च सोमं "यथा" "गौरः" मृगः "सरः" § पिबति, तथा "पिब" ‖ ॥

"परीणसं"-"परीणसा"—इति पाठौ ॥ ३ ॥ ७

२ १ २र र १र २ १ १
॥ आर्षभम ॥ अभित्वावृषभासुते । सुतꣳसृजामि ।
र १ १ २र १र २ १
मिपीतायारयि । सुतꣳसृजामि । पीता२३यायि । त्वा

---

* ऋ० वे० ६, ३, ४६, ४ । † 'अत आर्षभं साम'—इति वि० ।

‡ 'गोपरीणसम्—गावः परि समन्तात् नीयन्ते दक्षिणा यस्य स गोपरीणस इन्द्रः'—इति वि० ।

¶ राधसे—राधः अन्नं सोमलक्षणं तस्मिन् सन्निधानभूते सोमे—इति वि० ।

§ 'सरः सरणं कृत्वा'—इति वि० । "सरः"—इति निघण्टौ उदकनामसु षड्विंशत्तमं पदम् ( १, १२ ) ।

‖ 'गौरः यथापिब—तथाच ब्राह्मणे—"गौरमृगो ह स्म भूत्वा धन्वाद्गाग्मानं पिबति"—इति'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ३ ५ र ९ र १ २ १ १ १ १
२३म्या३। वा२या२३४औहोवा। श्रुहीमदा२३४५म् ॥(१)

१र र १र१र २ १ १र १ २ र १
माल्वामूराअविष्यवः। मोपह्वस्वोवा। नआदाभा२न्।

१र२ १ २र १र २ १ २ १
मोपह्वस्वानः। आदा२३भान्। मा२३कों३म्। आ२

३ ५र र २ १३१११ २ १ २र१र १र
ह्ला२३४औहोवा। द्विषवना२३४५ः॥(२) इह्वागोपरो

र १ २ र १ १र २
णसम्। मद्देमन्दोवा। तुराधासा२यि। मद्देमन्दन्तु।

१र २ १ २ १ ३ ५र र
राधा२३सायि। सा२३रा३ः। गौ२रा२३४औहोवा।

२ र १ २ ११११
यथापिबा२३४५(३) ॥ ५ * ॥ [१] ७

अथ चतुर्थतृचे—प्रथमा।

३ १ २ १ २ ३ २ २ ३ १ २ ३ १ २
इदंवसोसुतमन्धःपिबासुपूर्णमुदरम्।

१ २ ३ १ ३
अनाभयिन्ररिमाते ॥ १ † ॥

हे "वसो" वासयितरिन्द्र! "इदं" पुरोवर्त्तमानं "सुतम्" अभिषुतम् "अन्धः" अन्नं सामलक्षणं "पिब"। यथा—"उदरं"

* ऊ० गा० १प्र० २ख० ५सा०।

† छ० आ० २, १, ३, १० (१भा० १०५ पृ०)=ऋ० वे० ६, ७, १७, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"त्वदीयं" जठरं "सुपूर्णम्" अतिशयेन सम्पूर्णं भवति तथेत्यर्थः। हे "अनाभयिन्" [आ समन्ताद् बिभेति—इत्याभयी; बिभेतेरौणादिक इनिः; न आभयी अनाभयी तादृश!] हे इन्द्र! "ते" तुभ्यं त्वदर्थं "ररिम" उक्तलक्षणं सोमं दद्मः [रादाने (अदा०, प०) छान्दसो (३,२,१०५) लिट्॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ २उ ३ २ ३ २ ३ १ २
नृभिर्धौतःसुतोअश्नैरव्यावारैःपरिपूतः।
२ ३ २ ३ २ ३ १ २
अश्वोननिक्तोनदीषु॥ २ *॥

"नृभिः" अध्वरस्य नेतृभिः ऋत्विग्भिः "धौतः" तृणाद्यपनयनेन शोधितः [यद्वा; धौतः धूतः आधूतः, अदाभ्यग्रहे† आधूननेन संस्कृतः, तदनन्तरम् "अश्नैः" अश्मभिर्ग्रावभिः करणभूतैः "सुतः" अध्वर्युभिष्षुतः ततः "अव्यावारैः" अविमेषः

* ऋ० वे० ५, ७, १७, २।

† ग्रहः=गृहीतसोमं सोमपानपात्रम्। ते च प्रातःसवने उपांशुप्रभृतयः, माध्यन्दिने सवने मरुत्वतीयादयः, तृतीयसवने त्वादित्यादयः। किञ्चैतदतिरिक्ताः षोडश्यादि-यागविशेषे नियुक्ताश्च सन्ति बहवः षोडशीत्यादयः। तत्सर्वातिरिक्त श्चैकोऽदाभ्यनामकः; स च यस्मिन्नौदुम्बरे पात्रे अंशुगृहीतमस्ति न होतृचमसस्था निग्राभ्यास्वप्स्वाप आनीय तस्मिंस्त्रिस्त्रः सोमलताः प्रक्षिप्याग्नये त्वेत्यादिविभिर्मन्त्रैः क्रमेण गृह्यते विहितश्चैतत् कात्यायनेन "अदाभ्यं गृहीत्वाभिषिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनंशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति (य० वा० ८, ४७) प्रतिमन्त्रमुपयामः सर्वत्राविशेषात् (१२, ५, १९-२५)"—इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्सम्बन्धिभिः वालैः "परिपूतः" शोधितः, दशापवित्रस्य नाभि-पूततया ऊर्णास्तुकया हि सोमः परिपूयते ; तदुक्तम् भगवता आपस्तम्बेन—"शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां शकटे दशापवित्रस्य नाभिं कुरुते शुक्लाश्च लच्याः पवित्र मोतं भवति"—इति *। "नदीषु" नदनाख्यस्सु † "अश्वेन" अश्वइव "निक्तः" निर्णिक्तः शोधितः ‡ ; यथा अप्सु स्नातो अश्वः अपगतमलः सन् दीप्तो भवति, एवं वसतीवर्याख्याभिरद्भिरभि-षुतः सोमो दीप्तो भवतीत्यर्थः। ईदृशो यः सोमः "तन्तेयवम्"—इत्युत्तरया सम्बन्धः॥

"धौतः"-"धूतः"—इति पाठौ॥२॥

अथ तृतीया।

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २

तन्तेयवंयथागोभिःस्वादुमकर्मश्रीणन्तः।

१ २ ३ १ २ ३ १ २

इन्द्रत्वास्मिन्त्सधमादे॥ २ ¶ ॥ ८ §

"तं" पूर्वोक्तगुणं सोमं हे इन्द्र! "ते" त्वदर्थं "यवं यथा" यवमयं सवनीय-पुरोडाशमिव "गोभिः" गवि भवैः क्षीरादिभिः

---

* स्पष्टञ्चैतत् समस्तं यजुर्वाजसनेयि-संहितायां सप्तमाद्यध्यायचतुष्टये।

† 'नदीष—अधिकरणभूतासु'—इति वि०।

‡ 'निक्तः—स्नातः'—इति वि०।

¶ ऋ० वे० ४, ७, १७, ३।　　§ 'अत गारं साम'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अपणद्रव्यैः "श्रीणन्तः" मिश्रीकुर्वन्तः "स्वादु" रसवत्त्वेनास्वादनीयम् "अकर्म" अकार्ष्म * [करोतेर्लुङि "मन्त्रे घस (२,४,८०)"—इति च्लेर्लुक्] । यस्मादेवं तस्मात् हे "इन्द्र!" "त्वा" त्वां तादृशं सोमं पातुम् "अस्मिन्" वर्त्तमाने "सधमादे" सहमादने यज्ञे आह्वयामीति शेषः ॥ ३ ॥ ८

॥ गारम् ॥ इदंवसोसुतमन्धाइए । पिबासुपूर्णामुदरौ । होइवा । पिबासुपूर्णामुदरौ । होइवा । आनाभाइयोन् । ररिमाता । औइहोवा ॥(१) नृभिर्धौतःसुतोअश्नाइयिरे । अव्यावारैः पारिपूतौ । होइवा । अव्यावारैःपारिपूतौ । होइवा । अश्वोनाइनी । क्तोनदीषू । औइहोवा ॥(२) तन्तेवयंयथागोभीइरे । स्वादुमकाइर्माश्रीणन्तौ । होइवा । स्वादुमकर्माश्रीणन्तौ ।

* 'यवं यथा गोभिः स्वादुम् अकर्म क्षतवन्तः । गोभि रिति तृतीया-बहुवचनं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम् । गोभ्यः यवं यथा, गोभ्यः स्वादुमत्यास्वामयति तद्वत् तथापि सोमम् अकर्म करवाम । श्रीणन्तः प्रीणयन्तः, अथवा ० ० ०।'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २ १ १२ १ १ ४
होइवा। आइन्द्रात्वा३स्मीन्। सधमादा। औ३हो

५ ४
वा। होऽ५ई। डा॥ ६ *॥ [१] ८

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

प्रथमतृचे, प्रथमा ।

३ १२ २२ ३ १ २
इदꣳह्यन्वोजसासुतꣳराधानाम्पते ।

२ ३ २ १ २
पिबात्वाऽ३स्यगिर्वणः ॥ १ † ॥

हे "राधानां पते" धनानां स्वामिन्! "गिर्वणः" गीर्भिः स्तुतिभिः वननीय! हे इन्द्र! "ओजसा" बलेनावहितः त्वम् "इदम् अनु" अनेनानुक्रमेण उद्देश्यानुक्रमेणेत्यर्थः; "सुतम्" अभिषुतम् "अस्य" इमं सोमं "नु" क्षिप्रं "पिबहि" ॥ १ ॥

* ऊ० गा० १प्र० २ख० ६सा० ।
† छ० आ० २, २, ३, १ (१भा० ३०५पृ०)=ऋ० वे० ३, २, १६, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

२ ३ १ २ ३ १र २र ३ १र २र ३क २र
यस्तेअनुखधामसत्सुते नियच्छतन्वम् ।

१ २
सत्वाममत्तुसोम्य* ॥ २ † ॥

हे इन्द्र ! "ते" त्वदर्थं "यः" सोमः "स्वधाम्" अन्नम् "अनु" सृत्य ग्रावभिः अभिषुतः "असत्" भवेत् [ अस्तेर्लेटाडागमः । यद्वृत्तयोगान्न निघातः ( ८,१,६६ ), आगमस्यानुदात्तत्वे धातुस्वरः (६,१,१६२) ] । "सुते" तस्मिन् सोमे "तन्व" ‡ स्वकीयं शरीरं "नियच्छ" प्रेरय "सः" सोमः हे "सोम्य" सोमार्ह ¶ ! "त्वा" त्वां "ममत्तु" मादयतु ॥ २ ॥

अथ तृतीया ।

१ २ ३ २उ ३ १ २ ३ १ २
प्रतेअश्नोतुकुक्ष्योःप्रेन्द्रब्रह्मणाशिरः ।

१ ३ १ २ ३ २
प्रबाहूशूरराधसा ॥ ३ § ॥ ९ ‖

* "सोम्यम्"—इति ऋ-पाठः । † ऋ० वे० २, ७, १६, ६ ।

‡ "छन्दस्युभया ( ६, ४, ८६ )"—इति सूत्रस्थेन "तन्वादीनां छन्दसि बहुलम्"—इति वार्त्तिकवचनेनोवङोवैकल्पिकत्वं बोध्यम् ।

¶ "सोम्य—सोमानां स्वामिन् पते !'—इति वि० । "सोममर्हति यः ( ४, ४, १३७ )"इत्यन्दसो योऽत्र सायणमते सङ्गच्छते ।

§ ऋ० वे० ३, ३, १६, ७ ।

‖ 'अत घतस्यअश्विषनं साम'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्र !" "सः" सोमः "ते" तव "कुक्ष्योः" कुक्षे रुभयोः पार्श्वयोः "प्राश्नोतु" प्रकर्षेण व्याप्नोतु [ अशू व्याप्तौ विल्वस्य (स्वा०,आ०) लोटि व्यत्ययेन परस्मैपदम् (३,१,८५) निघातः (८,१,७०) ] तथा "ब्रह्मणा" स्तोत्रेण सहितः * स सोमः "शिरः" शरीरम् [ अवयविना अवयवो लक्ष्यते ] तच्छरीरं प्राप्नोतु। हे "शूर" विक्रान्तेन्द्र ! "राधसा" धनेन निमित्तेन तव "बाहू" अपि प्राप्नोतु॥

"राधसा"-"राधसः"—इति पाठौ॥ ३॥ ९

॥ घृतश्च्युन्निधनम्॥ इ२दᳪह्यन्१२ओजसा। सुतᳪ राधा। नाम्पाती। हो२वा३हायि। पिबातुव। स्युगा यिर्वाणी। हो२वा३हायि। पिबातुवौ। हो२वा३हा। स्युगायिः। वा२ना२३४औहोवा॥(१) यस्ते२अनुस्वा३धा मसात्। सुतायिनिय। च्छतानुवमौ। होवा३हायि।

---

* 'ब्रह्मणा अन्नेन, शिरः; अथवा ब्रह्मणा वैविद्यलक्षणेन शिरः। ०००। बाहू०००। व्याप्नोतु००। एतदुक्तं भवति समन्तात् मदीयेन यज्ञेन'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २र र २ १ २र
सत्वामम। तुसोमायौ। होवा३हायि। सत्वाममौ।

र २ १र ३ ५र र २ र
होवा३हा। तुसो। मा२या२३४औहोवा ॥(२) प्रतेअ

र १ १ २ १ २र र
श्नोतु३कुक्षियोः। प्रायिन्द्रब्र। ह्मणाशायिरौ। होवा

२ १ २ १ २र र १
३हायि। प्रबाहूभू। ररा धासौ। होवा३हायि। प्र

१ २र र २ १र ३ ५र र
बाहूभौ। होवा३हा। ररा। धा२सा२३४औहोवा।

२ १ ३ १ १ १ १
घृतश्चुता२३४५ः(३) ॥ ७ * ॥ [१] ९

अथ द्वितीय-तृचे, प्रथमा।

१उ ३ १ २ ३ १ २ ३ १र २र
आत्वेतानिषीदतेन्द्रमभिप्रगायत।

१ २ ३ १ २
सखायस्तोमवाहसः ॥ १ † ॥

"तु" [-शब्दः क्षिप्रार्थो निपातः, छान्दसं माङ्भ्याम् एतमिति शब्दोऽभ्यसनीयः]। हे "सखायः" ऋत्विजः! क्षिप्रम् अस्मिन्

---

* ऊ० गा० १प्र० २अ० ७गा०।

† छ० आ० २, २, २, १० (१भा० २७२ पृ०)=ऋ० वे० १, १, १९, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कर्मणि आगच्छत आगच्छत [ आदरार्थोऽभ्यासः ]। आगत्य च "निषीदत" उपविशत। उपविश्य च "इन्द्रम्" "अभिप्रगायत" सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः? "स्तोमवाहसः" त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति॥ ["अर्त्ति-स्तु-सु-हु-सृ धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन् (उ०,१,१३७)"—इति स्तौतेर्मन्-प्रत्ययान्तः स्तोमशब्दो नित्वादाद्युदात्तः (६,१,१९७)। स्तोमं वहन्तीति स्तोमवाहसः "वहि-हा-धाञ्-भ्यश्छन्दसि"-इत्यसुन् प्रत्ययः, तत्र णिदित्यनुवृत्तेः "अत उपधायाः (७,२,११६)"-इत्युपधाया वृद्धिः; कृदुत्तरपदप्रकृतिस्वरत्वे (६, २, १३९) प्राप्ते "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वञ्च ( उ०, ४, २२६ )"—इत्यौणादिकसूत्रात् समासआद्युदात्तः॥ १॥

अथ द्वितीया।

२ १ २ ३ १र २र ३ १ २

पुरूतमम्पुरूणामीशानं वार्य्याणाम्।

२ ३ १ ३ १ १ ३ २

इन्द्रꣳसोमेसचासुते॥ २ *॥

सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्त्तते। हे "सखायः" ऋत्विजः! "सचा" यूयं सर्वे सह यद्वा सचा परस्परसमवायेन

* ऋ० वे० १, १, १९, २।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सुते" अभिषुते सोमे प्रवृत्ते सति "इन्द्रम्" अभिप्रगायत। कीदृशमिन्द्रम्? "पुरूतमं" पुरून् बहुन् शत्रून् तामयति ग्लापयतीति पुरूतमः [तमु ग्लानौ (दि०,प०)—इति धातोर्ण्यन्तात् पचाद्यचि चित्वादन्तोदात्तेऽपि (६, १, १६३) कृदुत्तरपदप्रकृतिस्वरं (६, २, १३) बाधित्वा "परादिश्छन्दसि बहुलम्* (६, २, १९९)"—इत्युत्तरपदाद्युदात्तत्वम्], "पुरूणां" बहूनां "वार्याणां" वरणीयानां धनानाम्† "ईशानं" स्वामिनम् ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ २ ३ १र २र
सघानोयोगआभुवत्सरायेसपुरन्ध्या।
२ ३ १ २ ३ १र २र
गमद्वाजेभिरासनः ॥ ३ ‡ ॥ १० ¶

घ-शब्दोऽवधारणार्थोनिपातः,§ सर्वैस्तच्छब्दैः सम्बध्यते। "स घ" स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टः "नः" अस्माकं‖ "योगे" पूर्वमप्राप्तपुरुषार्थस्य सम्बन्धे** "आ भुवत्" आभिमुख्येन

* अनेन सूत्रे यत्तु सक्थ-शब्दस्यैवाद्युदात्तो विकल्प्यते, परमत्र पठितवार्त्तिकश्लोकेनैवान्यत्रापि सर्वत्र दृष्टानुविषयः कल्प्यन्ते। तथाच—"परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलन्ततः"—इति।

† 'वार्याणाम् उदकानाम्'—इति वि०।

‡ ऋ० वे० १, १, १९, ३।

¶ 'अत्र देवातिथं साम'—इति वि०।

§ 'घ—इति पदपूरणः'—इदि वि०।

‖ 'नः—अस्मभ्यम्'—इति वि०।

** 'योगे—यत्र देवता युज्यन्ते असौ योगः यज्ञे'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भवतु पुरुषार्थं साधयत्वित्यर्थः [भवते राशीर्लिङि परतो "लिङ्याशिष्यङ् (३, १, ८६)"—इत्यङ् प्रत्ययः, तस्य ङित्वेन गुणाभावात् उवङादेशः], स एव "राये" धनार्थम् "आभुवत्" आभवतु; स एव "पुरन्ध्या" योषित्या * भुवत् [यद्वा, बहुविधायां बुद्धावाभुवत् "पुरन्धिर्बहुधीः"—इति यास्कः (६, १३)] स एव "वाजेभिः" देवैः अन्नैः सह "नः" अस्मान् † "आगमत्" आगच्छतु [गमेर्लेट् तिप्, "इतश्चलोपः परस्मैपदेषु (३, ४, ९७)"—इति इकार-लोपः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपोलुक्, "लेटोडाटौ (३, ४, ९४)"—इत्यडागमः, आगमाश्रनुदात्ताः इति तस्यानुदात्तत्वे धातुस्वरएव (६, १, १६२) शिष्यते ॥ ३ ॥ १०

॥ दैवातिथम् ॥ आ१र२ २३४। एतानि। यी१र२दा२ई१र२ता। ५
इ२न्द्रमभा१यि। प्र१र२गा१यता। सा२रखा१रयस्तोम। वा। औ२
३हो। व१वा२र३हा२३४साः। हा२या१यि। सा१रखायः१रस्तोम।
वा। औ२३हो२। ऊ१म्मा२३। हा२३४५सो६हायि ॥(१)

* 'पुरन्ध्या—रथ्या'—इति वि०। "पुरन्धिर्बहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात्तस्यान्वादेश इत्येक मिन्द्र इत्यपरं स बहुकर्मतमः पुरां च दारयितृतमो वरुण इत्यपरम्"—इति निरु० नै० ६, १३।

† 'नः—अस्मभ्यम्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ २ ५ ५ २र र १ २ १र
पुरू३४। तम्पु। रूहुणाम्। ईशानंवा। रियाणा

२ १र २र १ २ २ १ २
म्। इन्द्र७सोमेस। चा। औ३हो। ववा२ह२

५ २ १ २ १र१र१ २ १
३४तायि। हयायि। इन्द्र७सोमेस। चा। औ३हो।

१ २ ५ ३ २ र र र
ऊम्मा२३। ह्व३४५तो६हायि॥(२) सघा३४। नोयोगे।

५र ५ २ र १र २ १ २ १र ४र १
आभूद्वात्। सरायेसाः। पुरन्धिया। गमद्वाजेभिः।

२ २ १ २ ५ २ १ ३
आ। औ३हो। ववा२सार३४नाः। हयायि। गम

१र२र १ २ १ २
द्वाजेभिः। आ। औ३हो। ऊम्मा२३। सा३४५

५
नो६हायि(३)॥ ८ *॥ [१] १०

अथ तृतीयतृचे, प्रथमा।

१ २ ३ १ २ ३ १ २
योगेयोगेतवस्तरं वाजेवाजेहवामहे।

१ २ ३ १ २ ३ १ २
सखायइन्द्रमूतये॥ १ †॥

---

* ऊ० गा० १प्र० २अ० ८सा०।

† छ० आ० २, २, २, ९ (१भा० ३७१ पृ०) = य० वे० ११, १४ = ऋ० वे० १. १, २९, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"योगेयोगे" प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे [ युजिर् योगे (रु०, उ०) "हलश्च (३, ४, १२१)"–इति घञ्, "चजोः कुघिण्ण्यतोः (७, ३, ५२)"—इति कुत्वम्, घञोञ्ञित्वादाद्युदात्तत्वम् (६, २, १९७), "नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावे सति, आम्रेडितानुदात्तम् (८, १,३)] "वाजे वाजे" कर्मविघातिनि तस्मिन् सङ्ग्रामे "तवस्तरं" अतिशयेन बलिनम् "इन्द्रम्" "ऊतये" रक्षार्थं "सखायः" सखिवत् प्रियाः वयं "हवामहे" आह्वयामः* ॥ १ ॥

अथ द्वितीया ।

१ २३१र २र ३ १ २ ३ १र २र
अनुप्रत्नस्यौकसोहुवेतुविप्रतिन्नरम् ।

२ ३ १ २ ३ २ ३ २
यन्तेपूर्वम्पिताहुवे ॥ २ † ॥

---

* कात्यायनेन त्वय मन्त्रोऽग्निचयनेऽजाभिमन्त्रणे नियुक्तः (१६, २,१०) महीधरस्त्वेव व्याचख्यौ—"अजदेवत्या गायत्री शुनःशेपदृष्टा, अजं मन्त्रयते। "सखायः" परस्परसख्यं प्राप्ता ऋत्विग्यजमाना वयम् "इन्द्रम्" इन्द्रियवन्तं वीर्यवन्त मिन्द्रियप्रदं वा अजम् "ऊतय" अवनाय रक्षणाय "हवामहे" आह्वयामः ह्वः ऋपि सम्प्रसारणम् (६, १, ३४)। क्व सति ? "वाजे-वाजे" तत्तदन्ने मनुष्याणं देवानाञ्च दातव्ये सति तत्तदन्नप्राप्ति निमित्तं वा। किम्भूतमजम्? "योगे-योगे तवस्तरं" युज्यत अनुष्ठीयत इति योगः कर्म, तस्मिन् तत्तत्कर्मणि तवस्तरं बलवत्तरमुत्साहवन्तम। तव इति बलनाम (निघ० २, ९, ४,)। तवो बलमस्याऽस्तीति तवस्वी। अस्मायेत्यादिना विन् (५, २, १२१)। अत्यन्तं तवस्वी तवस्तरस्तम् अतिशये तरप् विन्मतोर्लुगिति (५, ३, ६५) तरपि विनो लुक्॥"—इति ॥

† ऋ० वे० १, ९, २९, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्रत्नस्य" पुरातनस्य "ओकसः" स्थानस्य स्वर्गरूपस्य* सकाशात् "तुवि प्रतिं" बहून् यजमानान् प्रतिगन्तारम्† [अत्र प्रतिशब्दो भीमसेनो भीमइतिवत् प्रतिगन्तृ-शब्दं लक्षयित्वा तद्द्वारा तदर्थं लक्षयति, अतः प्रति प्रतिनिधि-प्रतिदानयोरिति-वत् सत्ववचनत्वेनानिपातत्वादनव्ययत्वे "पूरणगुणेत्यादिना (२, २, ११) न षष्ठी-समास-निषेधः]। "नरं" पुरुष-मिन्द्रम् "अनुहुवे" अनुक्रमेण कर्मस्वाह्वयामि [ह्वेञोलिटि "बहुलं छन्दसि (६, १, ३४)"—इति पूर्ववत्। सम्प्रसारण-पर-पूर्वत्वे द्विर्वचन-प्रकरणे "छन्दसि वा (६, १, १ वा०)"—इति वक्तव्यमिति द्विर्वचनाभावः। "यद्वृत्तयोगादनिघातः (८, १, ६६)]। "यं" "ते" त्वामिन्द्र "पिता" अस्मदीयो जनकः "पूर्वं" पुरा स्वकीयानुष्ठानकाले "हुवे" आहूतवान्, तमाह्वयामीति पूर्वेणान्वयः‡ ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
आघागमद्यदिश्रवत्सहस्रिणीभिरूतिभिः।

१ २ ३ १ २ ३ १ २
वाजेभिरुपनोहवम् ॥ ३ ¶ ॥ ११ §

* 'ओकसः—गृहस्य, उदकस्य, बलस्यान्नस्य वा'—इति वि०।

† 'तुविप्रतिं—तुविपुर्विति बहुनाम, बहुप्रतिम्, प्रतिशब्देनात्र शत्रवो गृह्यन्ते, बहुशत्रुमिन्द्रम्'—इति वि०।

‡ 'यं ते पूर्वं पिता हुवे—अन्तरात्मनश्चायम् हे मदीयान्तरात्मन्! तम् इन्द्रं हुवे, यं ते तव पूर्वतने काले त्वदीयः पिता आह्वयते।'—इति वि०।

¶ ऋ० वे० १, ९, २९, ४। § 'अत्र सौमेधं साम'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"यदि श्रवत्" यद्ययमिन्द्रो "नः" अस्मदीयं "हवम्" आह्वानं शृणुयात्, तदानीं स्वयमेव "सहस्रिणीभिः ऊतिभिः" बहुभिः पालनैः "वाजेभिः" अन्नैश्च "उप" समीपे "आ घ" अवश्यम्* "आगमत्" आगच्छेत् ॥ ३ ॥ ११

१र र र र र र १ ० १ र

॥ सौमेधम् ॥ योगेयोगेतवाहाउस्तारम्। वाजे

२र र १ २ ५

वाजे। हवा२माहायि। हुवायि। औ३हो२३४वा।

१ २र १ १ २

साखायइ। द्रमू२तायायि। हुवायि। औ३हो२३४

५ ३ र २ १ ऽ

वा। सखायआ। हुवा२यि। औ३हो२३४५वा६५६।

२ १ १११ २ र र १ २ १ र २

द्रमू३तये२३४५ ॥(१) अनुप्रत्नस्यौहोहाउकासाः। हुवेतु

१ २ ५

वि। प्रता२यिन्नाराम्। हुवायि। औ३हो२३४वा।

१ २र १र २ १ १ २

यान्तेपूर्वम्। पिता२हुवायि। हुवायि। औ३हो२३४

५ ३ र २र १ ऽ

वा। यन्तेपूर्वाम्। हुवा२यि। औ३हो२३४५वा६५६।

२ १ १ १ १ १ २र र र र १ २

पिता३हुवे २ ३ ४ ५ ॥(२) आघागमद्यदीहाउआवात्।

---

* 'आ घ – इति पदपूरणौ'—इति वि०। मन्त्रे "घा"—इति दीर्घपाठः। तत्र "निपातस्य च (६, ३, १३६)"—इति दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र १ २
साहस्रिणी। भिह्र२तायिभायिः। ह्रवायि। औ३हो

५ १२र १ १ २
२३४वा। वाजेभिह्र। पनो२हावाम्। ह्रवायि। औ

५ ३२र र २ १ ५
३हो२३४वा। वाजेभिह्र। ह्रवा२यि। औ३हो२३४५

२ १ १११
वा६५६। पनो३हवा२३४५म् (३)॥ ८ * ॥ [१] ११

अथ चतुर्थत्वचे, प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २ ३क ३र
इन्द्रसुतेषुसोमेषुक्रतुम्पुनीषउक्थ्यम्।

३ २ ३ १ २ ३ १ २ ३ २
विदेवृधस्यदक्षस्यमहाꣳहिषः॥ १† ॥

"सोमेषु" "सुतेषु" अभिषुतेषु सत्सु हे "इन्द्र!" त्वं तान् पीत्वा "क्रतु" कर्मणां कर्त्तारम् "उक्थ्यम्" स्तोतारञ्च "पुनीषे" शोधयसि। यद्वा सोमेष्वभिषुतेषु उक्थ्याख्यं "क्रतु" यागं तैः सोमैः पुनीषे यजमानैः पूतं कारयसि। किमर्थम्? "वृधस्य" वर्द्धकस्य "दक्षस्य" बलस्य "विदे" लाभाय "सः" तादृशस्त्वं "महान्" "हि" खलु; अतएवं कर्त्तुं शक्नोषीत्यर्थः॥

"इन्द्रसुतेषु"-"इन्द्रः सुतेषु"—इति, "पुनीषे"-"पुनीते"—इति, "दक्षस्यमहाꣳहिषः"—"दक्षसो महान्हिषः"—इति च पाठौ॥ १॥

* ऊ० गा० १प्र० २अ० ८खा०।

† ऋ० आ० ४, २, ५, १ (१ भा० ७८२ पृ०) = ऋ० वे० ६, १.७, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१२३१ २  ३२३  १२३२
सप्रथमेव्योमनिदेवाना७सदनेवृधः।

३ १ ३१२ ३ १२३१
सुपारःसुश्रवस्तमःसमप्सुजित्॥ २* ॥

"सः" इन्द्रः "प्रथमे" प्रथिते विस्तीर्णे मुख्ये वा † "व्योमनि" विशेषेण रक्षके च "देवानां" "सदने" सीदन्त्यस्मिन्निति सदनं स्थानं स्वर्गाख्यं तत्र ‡ स्थितः सन् "वृधः" यजमानानां वर्द्धयिता च भवति। तथा "सुपारः" सुष्ठु पारयिता प्रारब्धस्य सम्यक् परिसमापयिता ¶ "सुश्रवस्तमः" अतिशयेन शोभनं श्रवोऽन्नं यशोवा यस्य स तथोक्तः, "समप्सुजित्" सम्यक् अप्सूदकेषु प्राप्येषु सत्सु यत् तद्विघातनो वृत्रादेर्जेता; यद्वा, आप इत्यन्तरिक्षनाम (निघ० १, ३, ८) अन्तरिक्षे वर्त्तमानानामसुराणां जेता § तमु हुवे इत्युत्तरत्र सम्बन्धः॥ २॥

---

* ऋ० वे० ६, १, ७, २।

† 'प्रथमे यज्ञे'—इति वि०।

‡ 'देवानां सदने स्थाने यज्ञे'—इति वि०।

¶ 'सुखेन पार्यते यष्टुं यः सः सुपारः'—इति वि०।

§ 'समप्सुजित्—सङ्ग्रामेषु जेता'—इति वि०। "समत्सु"—इति सङ्ग्रामनामसु निघण्टौ दृश्यते (२, १७, २१) तदेव पाठभेदात् समप्सु—इत्येवात्र विवरणकृदाशयः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ ३ १ २ २ २ ३ १ २ २ १ २
तमुह्वेवाजसातयइन्द्रम्भरायशुष्मिणम् ।

१ २ ३ १ २र ३ १ २ ३ २
भवानःसुम्नेअन्तमःसखावृधे ॥ ३* ॥ १२ †

"तमु" पूर्वोक्तगुणमेव "शुष्मिणं" बलवन्तम् "इन्द्रं" "वाजसातये" बलाना मन्नानां वा साति र्लाभो यस्मिन् तादृशाय "भराय" सङ्ग्रामाय ; यद्वा, [ ध्रियन्ते तस्मिन् हवींषीति भरो यज्ञः, प्रायेण सङ्ग्रामनामानि यज्ञनामत्वेन च दृश्यन्ते ] भराय यज्ञार्थं "हुवे" आह्वयामि। हे इन्द्र ! त्वं "सुम्ने" सुखे धने वा लिप्सिते सति "नः" अस्माकम् "अन्तमः" अन्तिकतमः सन्निकृष्टतमो भव [ तमेतादेश्वेति अन्तिकशब्दस्यतादि लोपः ] ; "वृधे" वर्द्धनार्थञ्च "सखा" समानख्यानो मित्रभूतो भव ॥

"तमुहुवे"—"तमुह्वे—इति पाठौ ॥ ३ ॥ १२

१ २ २ १२ १ १ २
॥ कौत्सम् ॥ इन्द्रसुतेषुसोमेषू । क्रतुरम्पुनायि । ष

१ २ र १ २ २ र १
उक्थियाम् । विदेवार्द्धा२ । स्यदत्तस्या । महाऽ२हा

१ २ १ र र १
यिषा२ः । महाऽ२३हिषा३४३ः ॥(१) सपृथमेवियोमा

, ऋ० वे० ६, १, ७, २ ।

† 'अथ कौत्सं साम'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र १र २र१ १र १
नौ। देवा२नाꣳसा। दनवृधाः। सुपाराःसु२। अ

१ २ १ १ २
वस्तमाः। समप्सूजो२त्। समा२३प्सुजो३४३त्॥(२)

२ रर र१२ १ २ १
तमुक्ष्वेवाजसातायायि। इन्द्रा२भरा। यष्णुश्रणाम्।

२र१ र १ २र१ १
भवामाःह्व२। म्नेश्रन्तमाः। सखावाह्वा२यि। स

र१ १ २ १
खावाह्वा२यि। सखा२३वृधा३४३यि। ओ२३४५ई।

डा(३)॥ १० *॥ [१]

१ २१र२ १र २र१ र
॥ उद्वꣳशीयम्॥ इन्द्रसुतेषुसोमेषा। क्रतुम्पुनीषउक्था

१ १ २ १२ २
२३याम्। विदा२होश्यि। वा२३र्द्धा। स्यदा१हा३

२ र २ ५ १ ऽ २ २
स्या। मद्दाꣳहा२३४यिषाः। माहा३उवा३। उप्।

१ १ १ २१र र ११ रर र
हाऽ२यिषो३५हायि॥(१) सप्रथमेव्योमनिया। देवानाꣳ

र २ १ २ १ २ २
सदनेवा२३र्द्धाः। सुपा२ह्वो१। रा२३ःह्व। अवाश्स्ता

२ ३ ५ १ ऽ २ २ १
३माः। समप्सु२३४जीत्। सामा३उवा३। उप्। पव्ह

ऊ० गा० १प्र० २ख० १०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २र१र १र१११ र
ऽ२जो३५हायि ॥(२) तमुङ्ववेवाजसातयश्आ । इन्द्रम्भरा

१ १ २ १र २
यपुष्मार२३यिणाम् । भवा२हो१ ना२३:ह्व । मेत्रा

२ २ र २ ५ १ ऽ २
१न्त्ता३मा: । सखावा २ ३ ४ हौयि । साखा३उवा३ ।

२ १ २
उप् । वाऽ२ह्वौ३५हायि(३) ॥ २ * ॥ [२] १२

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

तृतीय-खण्ड: ॥ ३ ॥

---

अथ चतुर्थे खण्डे, प्रगाथरूपे—

प्रथमसूक्ते, प्रथमा ।

३१ २ ३१ २र३ १ २र३१२
एनावोअग्निन्नमसोर्जोनपातमाहुवे ।

३१ २र २१ २३ २र ३२३१२
प्रियञ्चेतिष्ठमरतिꣳस्वध्वरं विश्वस्यदूतममृतम् ॥ १ † ॥

---

* ऊ० गा० १९प्र० १ख० २सा० ।

† छन्द: आ० १, १, ५, १ (१ भा० १९७ पृ०) = ऋ० वे० ५, २, २१, १ ।

'इदानीं सन्निर्वत्त्व:, सच ह-देवत्य: अग्निरश्विनाविति'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ऊर्जः" बलस्य "नपातं" [ नपादित्यपत्यनाम ( निघ०२, २,१३) ] पुत्रं "प्रियम्" अस्माकम् "चेतिष्ठम्" अतिशयेन ज्ञातारं प्रज्ञापकं वा "अरतिं" गन्तारं स्वामिनं वा "स्वध्वरं" शोभन-यज्ञं "विश्वस्य" सर्वस्य यजमानस्य "दूतम्" "अमृतं" नित्यम् "अग्निम्" "एना" एतेन "नमसा" स्तोत्रेण हे ऋत्विग्यजमानाः ! "वः" युष्मदर्थम् "आहुवे" आह्वयामि ॥१॥

अथ द्वितीया ।

१ २ ३२ ३ १ २ ३ १२ ३क २र
सयोजतेअरुषाविश्वभोजसासदुद्रवत्स्वाहुतः ।
३ १ २ ३ २ ३ २ ३ १२ ३२उ ३ १ २
सुब्रह्मायज्ञःसुशमीवसूनान्देवꣳराधोजनानाम् ॥२*॥१३†

"सः" अग्निः "अरुषा" आरोचमानौ "विश्वभोजसा" विश्वस्य पालयितारा वह्नौ "योजते" स्वकीये रथे "युनक्तु" [यद्वा, "विश्वभोजसा" विश्वस्य रक्षकेण "अरुषा" आरोचमानेन तेजसा "योजते" अयुज्यत]। तदनन्तरं यः अग्निः "स्वाहुतः" स्तोतृभिः सुष्ठु आहुतः सन् "दुद्रवत्" आनेतुं देवान् प्रति भृशं द्रवतु गच्छतु। कीदृशः ? सुब्रह्मा शोभनस्तुतिकः शोभनान्नोवा "यज्ञः" यष्टव्यः "सुशमी" शोभनकर्मा च भवति ; ततः "वसूनां" वासकानां "जनानां" यजमानानां सम्बन्धि "राधः" हविर्लक्षणं धनं "देवं" द्योतमान मग्निम्प्रति गच्छत्विति शेषः ॥ २ ॥ १३

---

* ऋ० वे० ५,२,२१,२ ।   † 'अथ बारवन्तीयम्'— इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१२२२ २ २ १ २
॥ वारवन्तीयम् ॥ एनावोअ । औहोहायि । अग्नि

३ ५ २२ २ २ २१ ५ १
यिन्नामा२३४सा । ऊर्ज्जोनपातमाऊवो२३४हायि । प्रिय

२ २ ३२४२ ५ १ २ ५
ञ्चेतिष्ठमरति१ँसुवध्वा३४ । औहोवा । इहा२३४हायि ।

२ २ ५ २ १ २ १ ० २ ३२४२ ५
उऊवा२३४राम् । विश्वस्य । दूतमम्रा३४ । औहोवा ।

१ २ ५ ३२ २ ५२
इहा२३४हायि । औहो३१२३४ । ताम् । एहियाई

५ २ २२ १ २ ३ ५
हा ॥(१) विश्वस्यदूऔहोहायि । तामामा२३४र्त्ताम् ।

२ १ ५ १२ २ २ २ ३२४२ ५
सयोजा२३४हा । तेअरुषाविश्वभोजा३४ । औहोवा ।

१ २ ५ २ २ ५ २ १ २ १ ० २ २
इहा२३४हायि । उऊवा२३४सा । सदुद्र । वात्सुबाहू

३२ ४२ ५ १ २ ५ ३२ २ ५ऽ
३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । ताः ।

२ ५ २ २ २ १ २ ३ ५
एहियाईहा ॥(२) समुद्रवाऔहोहायि । हुवाहू२३४ताः ।

२ १ ५ १ २ २ ३२४२ ५
सुब्राह्मा२३४हायि । यज्ञःसुम्नमीवसू३४ । औहोवा ।

१ २ ५ २ २ ५ २२ १ २२ १
इहा२३४हायि । उऊवा२३४नाम् । देव१ँरा । धोज



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र ४र ५ १ २ ५ ३र २
नाइ४। औहोवा। इहार२३४हायि। औहो३१२३४।
५ऽ र ५
नाम्। एहियाईहा(३)॥ ८*॥ [१]

४ र र ४ २ ४
॥ महावामदेव्यम्† ॥ आऽ५यिना। वोआ३आ३यिन्न
५ १ र र र र १ २१
मसा। ऊ। जोनपातमाहुवेप्रियञ्चेतिष्ठमरतिꣳसुवध्व।
र २ १ २ ३ र २
राम्। औ२३होहायि। विश्वा२३स्यदू। तमौहो३।
१ १ २ ३ ४ २
हुम्मा२। माऽ२र्त्तौ३५हायि॥(१) वाऽ५यिस्व। स्यदू३ता
४ ५ १ र र र २र१
३मम्टताम्। साः। योजतेअरुषाविश्वभोज। सा।
२ र २ १ २ ३र २ १
औ३होहायि। सदू२३द्रवात्। सुवौहो३। हुम्मा२।
१ २ ३ ४ २ ४र ५
हुऽ२तौ३५हायि॥(२) सा५ऽदु। द्रवा३त्सू३वाहुताः।
१ र र २र १ र २
स्व। ब्रह्मायज्ञःसुशमीवसू। नाम्। औ२३होहायि।
१र र २ ३र १ १ १
देवा२३ꣳराधाः। जनौहो३। हुम्मा२। नाऽ२मौ३५
२
हायि॥ ११‡॥ [२]

---

* ऊ० गा० २१प्र० २ख० ८सा०। † 'वामदेव्यम्—इति ख० पु० पाठः।
‡ ऊ० मा० २१प्र० २ख० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ १ २२ १२
॥ अध्यम्॥ एनावोअा२ग्निम्। नमसोवा। ऊऽर्जो

२१ १ २२ २ १ २ १ २२ १ २ १
नपा। तमाऊवायि। प्रियञ्चेतिष्ठमरतिᳫंस्वध्वरं विश्व

२ २ १ २ १२ १
स्यदूतम्। अा२३। म्नताउवा। ऊधिया२॥(१) वि

१ २ १२ २ १ १ १ २ २ १
श्वस्यदू२तम्। अम्नतोवा। सयोजते। अरुषावायि।

२ २ २ १ २ १ २ १२
स्वभोजसासन्दूद्रवत्सु। अा२३। ऊताउवा। ऊधिया

१ २ १ २ १ २२ १ २
२॥(१) सदुद्रवा२त्सु। आऊतोवा। सुब्रह्माया। यज्ञः

३ १ १ २ २२ २ १ २ २२ १ २
सुशमायि। वसूनान्देवᳫंराधोज। ना२३। नाउवा।

१२
ऊधिया२॥ १४ *॥ [३] १३

अथ द्वितीय-प्रगाथे—

प्रथमा।

१ १ ३ १ १ २ ३ २ ३ १
प्रत्युअदर्श्यायत्यू३ऽच्छन्तीदुहितादिवः।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अपोमहीवृणुतेचक्षुषातमोज्योतिष्कृणोतिसूनरी॥ १ †॥

* ऊ० गा० २१प्र० १अ० १४सा०।

† ऋ० सा० ४, १, २, १ (१भा० ६११ प०)=ऋ० वे० ५, ६, १, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"आयती" आगच्छती "उच्छन्ती" तमांसि विवासयन्ती वर्जयन्ती "दिवः" द्युलोकस्य सूर्य्यस्य वा "दुहिता" पुत्री, एवभूता उषाः "प्रति अदर्शि" सर्वैः प्रति दृश्यते ; "उ"—इति पूरणः ; सैषा "मही" महत् "तमः" नैशमन्धकारं "चक्षुषा" दर्शनेन "अप उ" [—इति निपातद्वय समुदायः अपेत्यस्यार्थे] "व्रणुते" निवारयति। एवं कृत्वा "सुनरी" जनानां सुष्ठु नेत्री उषाः "ज्योतिः" प्रकाशं "कृणोति" करोति॥

"व्रणुतेचक्षुषा"-"व्ययतिचक्षुषे"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ १ ३ १र २र ३ १
उदुस्रियाःसृजतेसूर्यःसचाउद्यन्नक्षत्रमर्च्चिवत्।

१ २र २ २ १ १ २ ३ २ ३ १ १
तवेदुषोव्युषिसूर्यस्यचसम्भक्तेनगमेमहि॥ २ *॥ १४ †

"सूर्यः" सर्वस्य प्रेरकआदित्यः "उस्रियाः" रश्मीन् "सचा" सह युगपदेव "उत्सृज्यते" उद्गमयति। तथा "उद्यत्" उद्गच्छत् प्रादुर्भवन् "नक्षत्रं" नभसि दृश्यमानं ग्रहनक्षत्रादिकम् "अर्च्चिवत्" दीप्तिमत् करोति ; ["सौरेण तेजसा हि नक्तं चन्द्रप्रभृतीनां नक्षत्राणि भासन्ते", "सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः"—इति हि निगमान्तरम्। एवञ्च सति हे "उषः"

* ऋ० वे० ५, ६, १, २। † त्रयोदशसूक्ते यन्त्रामसामानि दृष्ट्वापितन्नाभान्येव।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उषोदेवते! "तव" "सूर्य्यस्य" च "व्युषि" विवासने प्रकाशने सति "भक्तेन" अन्नेन "सङ्गमेमहि" वयं गच्छेमहि। "इत्"-शब्दः पूरकः॥२॥ १४

२ र र १ र ३
॥ वारवन्तीयम्॥ प्रत्युवदाऔहोहायि। श्रीआयार३४
५ २ र र १ ५ १ र र
तायि। उच्छन्तीदुहितादायिवोर३४हायि। अपोमही
र र २ ३र ४र ५ १ २ ५ २
वृणुतिचक्षुषाता३४। औहोवा। इहार३४हायि। उऊ
२ ५ २र १ २ १ ७र २ ३र ४र ५
वार३४माः। ज्योतिष्कृ। णोतिसूना३४। औहोवा।
१ ३ ५ २र २ ५ र
इहार३४हायि। औहो३१२३४। रायि। एहियाई
५ २र र र १ १ ३ ५
हा॥(१) ज्योतिष्कृणोऔहोहायि। तायिसूनार३४रा
२ १ ५ १र र र २ ३र
यि। उदूस्रो२३४हा। याःसृजतेसूरियःसा३४। औ
४र ५ १ ३ ५ २ ३ ५ २ १ २
होवा। इहार३४हायि। उऊवार३४चा। उद्यन्।
१ ० २ ३र ४र ५ १ ३ ५ ३र २
नात्रमर्चो३४। औहोवा। इहार३४हायि। औहो३
५र ५ २ र र १ २
१२३४। वात्। एहियाईहा॥(२) उद्यन्नक्षाऔहोहा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ ११ ५ १र
यि। त्रामर्त्या२३४यिवात्। तविदू२३४हायि। षोविषू

र २ ३र ४र ५ १ २ ५ २
षिस्ूरियस्या३४। औहोवा। इहा२३४हायि। उक्ष

२ ५ २ १ १र १ ७ र २ १र ४र ५ १
वा२३४चा। सम्भक्तो। नागमेमा३४। औहोवा। इ

२ ५ ३र २ ५र
हा२३४ हायि। औहो ३ १ २ ३ ४। हायि। एहिया६

५
हा(३) ॥ ८ * ॥ [१]

२ ४ २ ४र ५ १
॥ वामदेव्यम् ॥ प्रा५त्यु। अदा३र्शा३आयतायि। ऊ।

र र र र र र २र१ २
च्छन्तीदुहितादिवोअपोमहीवृणुतेचक्षुषात। मा। औ३

र २ १र २ ३ र २ १
होहायि। ज्योता२३यिष्कृणो। तिसौहो३। ऊम्मा

१ २ २ ४ २
२। ना२रो३५हायि ॥(१) ज्यो५तिः। कृणो३ता३यि

४र ५ १ र रर २ १ २
सूनरायि। ऊत्। उस्रियाःसृजतेसूरियस्साचा। औ

र २ १ २ २ र २ १
३होहायि। उद्या२३न्नक्षा। अमौहो३। ऊम्मा२।

१ २ २ ४ २ ४ ५
चा२यिवी३५हायि ॥(२) ऊ५द्यत्। नक्षा३त्रा३मर्चिवात्।

---

* ऊ० गा० २१प्र० २ख० ९सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

१ २ २ २ २ १ २ २ २
ता। वेङ्कषोवियुषिसूरियस्य। चा। औ३होवायि।
१ २ २ ३ २ २ १ १
सम्भा२३क्तेना। गमौहो३। ऊम्मा२। मा॒ऽ२हो३५
२
वायि(३)॥ १२ *॥ [२]

१ २ १ २ १
॥ अध्यम् ॥ प्रत्युवदा२र्शि। आयतौवा। उच्छ
२२ १ २ २२ २ १ २ २ १२ १२ १ १२ १ १२ १२
न्तीदू। हिवादिवाः। अपोमहीवृणुते चक्षुषातमोज्यो
१ २ १ २ १२
तिष्कृणोति। सू२३। नराउवा। अूधिया२॥(१)
१२ २ १ २१ २१ १ १ १२
ज्योतिष्कृणो२ति। सूनरौवा। उदुस्रियाः। सृजते
१ २२ १ २१ २
सू। रियःसचाउद्यन्नक्षत्रम्। आ२३। विवाउवा।
१२ १ १ २१२ २१
अूधिया२॥ उद्यन्नक्षा२त्रम्। अर्चिवौवा। तवेदुषो।
२ ३२ २ १ १ १ २२ १ २
वियुषिसू। रियस्यचसम्भक्तेनग। मा२३यि। महाउ
१२
वा। अूधिया२(३)॥ १५ †॥ [३] १४

---

* ऊ० गा० २१प्र० २ख० १२सा०।

† ऊ० गा० २१प्र० २ख० १५ सा०।

Digitized by Madhuban Trust, Delhi



अथ तृतीये प्रगाथे—

प्रथमा।

३ १ २ ३ १ २ ३ १ १
इमाउवान्दिविष्टयउस्राहवन्तेअश्विना।
३ १ २ ३ १ २ ३ १ २ ३ १२ २२
अयंवामह्वेवसेशचीवसूविशंविश ंहिगच्छथः॥ १ *॥

"इमाः" "दिविष्टयः" दिवमिच्छन्त्यः प्रजा ऋत्विजोऽपि "उ"—इति चार्थे ; हे "अश्विना !" "उस्रा" वासकौ उस्रौ वा "हवन्ते" आह्वयन्ति "अयं" स्तोतापि हे "शचीवसौ" कर्म्मधन ! "वां" युवाम् "अवसे" अस्मद्रक्षणाय युवयोस्तर्पणाय वा "अह्वे" आह्वयामि। किमर्थम् ? एवं प्रजा अपि, अयमपीत्यादरोक्ति-रिति "विशं विशं हि गच्छथः" सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छतः खलु, तस्मादेवमुच्यत इति॥ १॥

अथ द्वितीया।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
युवञ्चित्रन्ददथुर्भोजनन्नराचोदेथा ंसूनृतावते।
३ १२ ३ ३ १२ ३ १ २ ३ १ २ ३ १ २२
अर्वाग्रथ ंसमनसानियच्छतम्पिबत ंसोम्यम्मधु॥२†॥१५‡

---

* ऋ० आ०४, ८, ९, २ (१भा० ६१३पृ०)=ऋ० वे०५, ५, २१, १।

† ऋ० वे०५, ५, २१, १। ‡ त्रयोदश-चतुर्द्दशसूक्तयोर्यन्नामानि सामानि इहापि तन्नामान्येव।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "नरा" नेतारावश्विनौ ! "युवं" युवां "चित्रं" चायनीयं "भोजनं" धनं "ददथुः" धारयेथे, तद्वन् "सूनृतावते" स्तुतिमते स्तोत्रे "चोदेथां" प्रेरयतम्, * तदर्थं "समनसा" समानमनस्कौ सन्तौ "रथं" युवयोः सम्बन्धिनम् "अर्वाग्" अस्मदभिमुखं "नियच्छतं" नियमतम्, तथा कृत्वा "सोम्यं" सोमसम्बन्धिनं "मधु" मधुरसञ्च † "पिबतम्" ॥ २ ॥ १५

१र र र १ २ ३
॥ वारवन्तीयम् ॥ इमाउवाऔहोहायि। हायिविष्टा२
५ २ र १ ५ १ २ र
३४याः । उत्साहवन्तेअश्वायिनो२३४हायि। अयंवामह्ने
र र २ ३र ४र ५ १ ३ ५ २
अवसेशचीवा३४ । औहोवा। इहा२३४हायि। उक्
३ ५ २ १ २ १ ७ २ ३र ४र ५
वा२३४सू। विशंवि। शाᳲहिगच्छा३४। औहोवा।
१ ३ ५ ३र २ ५र ५
इहा२३४हायि। औहो३१२३४। थाः। एहियाई‌हा ॥ (१)
२ र र १ २ २ ५ १२
विशंविशाऔहोहायि। हायिगच्छा२३४थाः। युवाञ्चा

---

* 'चोदेथां सूनृतावते—एवं चोदनां कुरुतां यथा सूनृता वयं भवेम !'—इति वि०।

† 'सोम्यं मधु—सोमे भवं स्वादुद्रव्यम्'—इति वि०। "मये च (४, ४, १३८)—इति पा०। "सोमशब्दाद्यः स्यात्मयडर्थे। सोम्यं मधु सोममयमित्यर्थः ॥"—इति च तत्र दीक्षितः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ र २ ३र ४र ५ १ २
२३४यिहायि। त्वन्ददद्युभीजनन्ना३४। औहोवा। इहा

५ २ ३ ५ २र१र२र १ ७ र २
२३४हायि। उद्भवा२३४रा। चोदेथाम्। स्वनृतावा३४।

३र ४र ५ १ २ ५ ३र २ ५र
औहोवा। इहा२३४हायि। औहो३१२३४। तायि। एहि

५ १र र र र र १ २ ३ ५
याइहा॥(२) चोदेयाऽसूऔहौहायि। नार्त्तावा२३४तायि।

२ १ ५ १ र २ ३र ४र ५
अर्वाग्रा२३४हा। थऽसमनमानियच्छा३४। औहोवा।

१ २ ५ २ ३ ५ २ १ २ १ ०
इहा२३४हायि। उद्भवा२३४ताम्। पिबतम्। सौमि

२ ३र ४र ५ १ २ ५ ३र २
यम्मा३४। औहोवा। इहा२३४हायि। औहो३१२३

५र ५ ४
४। धू। एहियाइहा। हो५ई। डा(३)॥१०*॥ [१]

३ र ४ २ ४ ५
॥ वामदेव्यम्॥ आऽ५यिमाः। उवा३न्दा३यिविष्टयाः।

१ र र र र र र २११
ऊ। स्वाद्वन्तेअश्विनाअयंवामह्वेअवसेशचीव। सु।

२ र २ १ २ ३र २ १
औ३होहायि। विशा२३ंविशाम्। हिगौहो३। ऊम्मा

१ २ ३ ४
२। काऽर्यो३५हायि॥(१) वाऽ५यिशाम्। विशा३ऽ

* ऊ० गा० २१प्र० २ख० १०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ४ ५ १ २र २ १
हाऽ३यिगच्छथाः। यू। वञ्चिचन्ददथुर्भोजनन्न। रा।
२ ३र २ १र २र २ २ ३र २ १
औ३होवायि। चोदे२३याꣳसू। नृतौहो३। ऊम्मा
१ २ ३ २र ४ १
२। वाऽ२तो३५हायि॥(२) चोऽ५दे। थाꣳसू३ना३
४र ५ १ २र २र २ १
र्त्तावनायि। आ। र्वाग्रथꣳसमनसानियच्छ। ताम्।
२र २ १ २ ३र २ १
औ२३होवायि। पिबा२३तꣳसो। मियौहो३। ऊम्मा
१ २
२। मा२धो३५हायि(३)॥ १२ *॥ [२]
१र १ २ १र
॥ अध्यम्॥ इमाउवा२न्दि। विष्टयोवा। उस्रा
२ १ २र ३ २ १ २ १र २ १र २र १ र २ २ १ २
हवा। तेअश्विना। अयवामह्नेवसेशचीवस्वविशंविशꣳ
१ २ १र १
हि। गा२३। च्छथाउ। वा। अधिया२॥(१) वि
१ १ १ २ १ २ २ २ १
शंविशा२ꣳहि। गच्छथोवा। युवञ्चित्राम्। ददथुर्भो।
२ र १र र २र र १ २ १र
जनन्नराचोदेयाꣳह्नन्। ता२३। वताउवा। अधिया
१र र र र १ २ १र २ १
२॥(२) चोदेयाꣳसू२न्। तावतोवा। अर्वाग्रथाम्।

---

* ऊ० गा० २१प्र० २ख० १२खा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ २ १        २   १ २ र १        २
समनसा। नियच्छतम्पिबतꣳसोमि। या२३म्। मधा
     १र        १  २           १
उवा। अूधिया२। ए२३हिया ३४३। ओ२३४५ई।

डा॥ १६ *॥[३]१५

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य
चतुर्थः खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡—

अस्यप्रत्नेति नवर्चसूक्ते, प्रथमा।

२ २ ३ २उ  ३ १ २  ३ १ २  ३ १ २
अस्यप्रत्नामनुद्युतꣳशुक्तन्दुदुह्रे अह्रयः।
१ २   ३ १र  २र
पयःसहस्रसामृषिम्॥ १ ¶॥

"अस्य" सोमस्य "प्रत्नां" पुरातनां "द्युतं" द्योतमानां तनुम् "अंनु" "शुक्रं" दीप्तं "सहस्रसां" अभिलषितस्यापरि-

---

* ऊ० गा० १प्र० २ख० १६सा०।

† 'समाप्ता सन्धिः। अथ षोड़शिकोऽतिरात्रो ब्राह्मण-समाम्नायेऽथ ऋक्समाम्नाये न तथा कल्पप्रकारः कल्पसो ज्योतिष्टोमोऽतिरात्रः षोड़शिकः। तथा च लक्षण-कारः—अतिरात्रो ०००'—इति वि०।

‡ 'इदानीं द्वादशाहस्य प्रथममहस्तस्य बहिष्पवमानम्'—इति वि०।

¶ य० वा० ९, १६=ऋ० वे० ७, १, ९, १।

( ३२ )



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मितस्य फलस्य दातारम् "ऋषिम्" अतीन्द्रियकर्म्मफल-द्रष्टारं "पयः" पातव्यं * "अह्रयः" कवयः † "दुह्रे" दुहन्ति ‡ ॥ १ ॥

* 'पयः—क्षीरम्'—इति वि०।

† 'अह्रयः—अह्राकाराः'—इति वि०।

‡ अत्र महीधरः—"गायत्र्यवत्सारदृष्टा गोऽग्निपयोदेवत्या। अस्याग्नेः प्रत्नां चिरन्तनकालभवां घृतमनु दीप्तिमनुलक्ष्य। अह्रयः नास्ति ह्रीर्येषामीदृशा लज्जारहिता दोग्धारः ऋषिं गां शुक्रं शुद्धं पयो दुदुह्रे दुदुहिरे। दुहेर्लिटि इरयो रे इति रे आदेशे रूपम्। ऋष गतौ। अर्षति दोहनस्थाने गच्छतीति ऋषिगाः। तां होमार्थं दुग्धवन्तः। सायं दोहनकालेऽग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पतिष्यतीति शङ्कया दोग्धॄणां लज्जा भवति। तस्यामग्निदीप्तौ स्कन्दशङ्कानुदयाल्लज्जाभावादह्रयो दोग्धारः। किम्भूतामृषिं सहस्रसाम्। योऽन्तकर्म्मणि। सहस्रसङ्ख्याकानि कर्म्माणि स्यति समापयति क्षीरदध्याज्यहविःप्रदानेनेति सहस्रसा ताम्। स्यतेः क्विप्। तद्वा अस्या ऋचोऽर्थान्तरम्। गाम्प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते। तासु हाग्निरभिदध्यौ मिथुन्येऽनया स्यामिति तां सम्बभूव तस्यां रेतः प्रासिञ्चत्तत्पयोऽभवदित्यादि (२,२,४,१५)। तदभिप्रायमेषा ऋग्वदति। अह्रयः गावः नास्ति ह्रीर्लज्जा यासां ता अह्रयः अलज्जा उज्ज्वलाः प्रशस्ता इत्यर्थः। मलिनो हि लज्जते। अह्रयो गावोऽस्याग्नेः प्रत्नां चिरन्तनीमात्मानुपक्तां घृतं दीप्तिं शुक्रं शुक्ररूपापन्नां घृतमेव पयो दुग्धं दुदुह्रे दुहन्ति क्षरन्ति। अग्निना शुक्ररूपेण सिक्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्तीत्यर्थः। सहस्रसामृषिमिति विशेषणद्वयं पयसः। सहस्रं सनोति सहस्रसास्तम्। चातुर्मास्यपशुसोमानां सम्भक्तारम्। पुंस्त्वमार्षम्। जनसनखनक्रमगमो विडिति विट्प्रत्यये विड्वनोरनुनासिकस्यादित्याकारे वेर्लोपे सहस्रसा इति रूपम्। तथा ऋषिं द्रष्टारम्। गवि वर्त्तमानं दृष्टत्वं पयस्युपचर्यते। स हैनानुदीक्ष्य हिङ्ङ्कारेत्युपक्रम्य ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार इत्यादिना ग्रन्थेन गोभिर्हिङ्कारो दृष्ट इति प्रत्यपादि। यद्वा सहस्रसामृषिमिति विभक्तिलिङ्गवचनव्यत्ययेन अह्रय इत्यस्य विशेषणद्वयम्। किम्भूता अह्रयः सहस्रसाः ऋषयः। पूर्ववदर्थो वा"—इति ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ १ २ १र ९ २ ३ १ र २र
अयꣳसूर्य्य इवोपदृगयꣳसराꣳसिधावति।

३ २ ३ २ र ३ १ र २ र
सप्तप्रवतआदिवम् ॥ २* ॥

"अयं" सोमः "सूर्य्य इव" यथा सूर्य्यः सर्व्वस्य लोकस्योपद्रष्टा, तथा कर्म्मणाम् "उपदृक्" उपद्रष्टा; अपिच "अयं" सोमः "सरांसि" त्रिंशत् उक्थपात्राणि [—इति केचिद् वदन्ति, अपरेतु त्रिंशदहोरात्राणि सरांसीति], तानि "धावति" प्रतिगच्छति [तथाच यास्कः—"तत्रैतद् याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि, माध्यन्दिने सवने एकदेवतानि, तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति, तान्यत्र सरांस्युच्यन्ते—त्रिंशदपरपक्षस्याहोरात्राः त्रिंशत् पूर्व्वपक्षस्येति नैरुक्ताः (५, ११) इति †]। अपिचायं सोमः "दिवम्" अधिकृत्य "सप्त प्रवत" सप्त नदीरातिष्ठति‡ ॥ २ ॥

* ऋ० वे० ७, १, २, २।

† "तथा एताश्चान्द्रमसा आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति। तथापि निगमो भवति। यमक्षितिमक्षितयः पिबन्तीति तं पूर्व्वपक्ष आप्याययन्ति। तथापि निगमो भवति। यथा देवा अंशुमाप्याययन्तीति"—इति च तच्छिष्टांशः।

‡ 'सप्त प्रवत—सप्त लोकान् प्रवत। अथवा सप्त छन्दांसि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

३ १र २र १ १र २र३ १२
अयंविश्वानितिष्ठतिपुनानोभुवनोपरि।
१ २ ३१र २र
सोमोदेवोनसूर्यः॥ ३*॥ १६ †

"पुनानः" पूयमानः "अयं" "सोमः" "विश्वानि" सर्वाणि "भुवना" भुवनानि सर्वेषां भुवनानाम् "उपरि" "तिष्ठति"। तत्र दृष्टान्तमाह—"देवो न सूर्यः" यथा सूर्यो देवः सर्वेषां भुवनानामुपरि तिष्ठति तद्वदयं सोमोऽपीत्यर्थः॥ ३॥ १६

३ २ र
॥ सत्रासाहीयम्॥ अस्या२३। प्रत्नामनुद्युतम्।
५ ५ १ र १ १
ओ६वा।॰ शुक्रन्दुदुह्रे अह्रा२याः। पा२याः। सा२३
२ १ ऽ २र २र २ १ ५ ५
हा। स्वसौ२हो वाहा३४३यि। आ२३४र्षौ६हायि॥
३ २ र र ५ ५ १
(१) अया३४म्। सूर्यइवोपदृक्। ओ६वा। अय७
र र १ १ २ १ ऽ
सरा७सिधावा२तायि। सा२प्ता। प्रा२३वा। तऔ
२र ३र २ १ ५ ५ ३ २
३हो। वाहा३४३यि। दा२३४यिवो६हायि॥(२) अया

* ऋ० वं० ७, १, २, ३।

† मूलेत्येतदन्त मेव षोड़शं स्तूक्तम्, विवरणादि-मतेप्येवमेव। 'उक्तः प्रथमपर्य्यायः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३४म्। विश्वानितिष्ठति। ओ६वा। पुनानोभुवनो

पा२रायि। सो२मो। दा२३यिवाः। नसौ३र्हो। वा

हा३४३यि। रा२३४योई्हायि(३)॥ ८ *॥ [१]

॥ आमहीयवम्॥ अस्यप्रा३त्नामनुद्यताम्। शु

क्रान्दू१दू२। ह्रे आ२३ह्रयाः। पयःसहा। ससा२३

मृषाउ। वा३॥(१) अयꣳसू३र्य्यइवोपदृक्। अयꣳसा

१रा२। सिधा२३वतायि। सप्तप्रवा। तआ२३दिवाउ।

वा३॥(२) अयंवा३यिश्वानितिष्ठायि। पुनानो१भू२। व

नो२३परायि। सोमोदेवाः। नसू२३रियाउ। वा३।

स्तोषे३४५ (३)॥ ३ †॥ [२]

॥ जराबोधीयम्॥ अस्यप्रत्नोवा। द्यानुद्युताम्।

शुक्रान्दू२३दू। ह्रे याःसा१हा२३सा। साम्। स्तषो३

---

* ऊ० गा० ६प्र० १ख० ६सा०। † ऊ० गा० ६प्र० १ख० ३सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १ १ १ र २ १
४५ई। डा॥(१) अयꣳसूर्य्योवा। आयिवोपदृक्।
२ १ र र १ २ ४
अयाꣳसार२३रा। सिधावातायि। सप्ताप्रा१वार२३ताः।
५र १ २ २ १ १ १
आ। दिवो२३४५ई। डा॥(२) अयंविश्वोवा। नायि
२१ २१ १ र १ र २
तिष्ठतायि पुनानो२३भू। वनोपारायि। सोमोदा१
४ ५र ३ १
यिवार२३ना। सू। रियो२३४५ई। डा(३)॥१०॥[३]
२र र १
॥ हाविष्मतम्॥ हावस्यप्रत्नामनुद्युतꣳहाउ। शुक्र
२ १ २ २ ५ १ १ १
न्दुदू३। क्रे अह्वा२३४याः। ऐ२हो१आ२३यिही। प
२ १ १र ३ ५र र १र
याःसा३हा। स्वसाम्। आ२र्षा२३४औहोवा॥(१) हा
र र १ २ १ १ ३
वयꣳसूर्य्योवोपदृग्घाउ। अयꣳसरा३। सायिधावार२३
५ २ १ २ २ १र
४तायि। ऐ२हो१आ२३यिही। सप्ताप्रा३वा। तआ।
३ ५र र २र र
दा२र्यिवा२३४औहोवा॥(२) हावयंविश्वानितिष्ठतिहाउ।
१र र २ १ २ २ ५ २
पुनानोभू३। वानोपार२३४रायि। ऐ२हो१आर३यिही।

० ऋ० गा० ८प्र० २ख० १०षा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ २ १र ३ ५रर २ १
सोमोदा३यिंवाः। नह्व। रा२या२३४औहोवा। हवि

२ १ १ १ १
ष्मते२३४५॥ ८*॥ [४]

२ १ २ १र १ १
॥ आभूभार्गवम्॥ अस्यप्रत्नाम। नुद्यू३ताम्।

१ २ १ ३ ५ १ २
शुक्रन्दुदू३। ह्रेआ२ह्रा२३४याः। पयाःसा१हार२।

२ २ १ ५ ५ १ १ र २र
स्वसा३म्। आ२३४र्षीईहायि॥(१) अयꣳह्वर्यः। दुवो

२ १ २ १ ३ ५ १
पा३हक्। आयꣳसरा३। सायिधा२वा२३४तायि। स

२ २ २ १ ५ ५ २ १
प्राप्रा१वा२। तआ३। दा२३४यिवोईहायि॥(२) अयं

र २ २ १ र र २ १ ३
विश्वानि। तिष्ठा३तायि। पूनानोमू३। वानो२पा२३

५ १र २ ३ २ १ ५ ५
४रायि। सोमोदा१यिवा२ः। नह्व३। रा२३४योईहा

यि॥ १९†॥ [५]

२ र १ २ १ १
॥ मार्गीयवाद्यम्॥ अस्यौहोवा। प्रात्ना२म्। अ

१ २ ५ २ १ २ र १ २ १
नूद्यू२३४ताम्। शुक्रन्दुदू। ह्रेआह्रा१या२ः। पयः।

* ऊ० गा० ११प्र० २ख० ८सा०। † ऊ० गा० १४प्र० १ख० १९सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ३ ५ १ २ ५र र
हा। औ३होयि। सा२३४हा। सा२सा२३४औहो
२ १ १११ २ र १ २ १
वा। ए३। ऋषा२३४५यिम् ॥(१) अयौहोवा। सू
३ २ ३ ५ २ १ २र १ २
र्य्यारिः। द्रुवोपा२३४हक्। अयꣳसरा। सिधावा१ता२
१ २ २ ३ ५ १ २
यि। सप्त। हा। औ३होयि। प्रा२३४वा। ता२आ
५र र २ १ ११११ २ २ १ १
२३४औहोवा। ए३। दिवा२३४५म् ॥(२) औयौहोवा।
१ ३ २ ३ ५ १ र२र १
वायिश्वा२। नितायिष्ठा२३४तायि। पुनानोभु। बनो
२ १र २ २ ३
पा१रा२यि। सोमः। हा। औ३होयि। दा२३४यि
५ १ २ ५र र २ १ १ १
वाः। ना२स २३४ औहोवा। ए३। रिया २ ३
१ १
४ ५ः(३) ॥ २० * ॥ [६]

२ र २ १
॥ सौमित्रम् ॥ अस्यप्रत्नामनुद्यु ता३मे। प्रुक्रन्दु
२र २ १ २
दुह्रे। आ२१२३। ह्रया३४३ः। पा२३याः। सहा
१ ४ ५ ४ ५ २ र
२ओ२३। स्रसोवा। आ५षीईहायि ॥(१) अयꣳसूर्य्य

* ऊ० गा० १४प्र० १ख० २०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इवोपह३गे। अयꣳसराꣳसि। धा२१ऽ२३। वता३४
३यि। सार२३न्ना। प्रवा२ओ२३। तओवा। दा५यिवो
६हायि॥(२) अयंविश्वानितिष्ठता३ए। पुनानोभुव।
नो२१ऽ२३। परा३४३यि। सो२३मा:। देवा२ओ२
३। नओवा। रा५योई्हायि(३)॥ १ *॥ [७]

॥ ऐटतम्॥ अस्य। एआस्या। प्रत्नाम। नू३।
आ२नू२३४औहोवा। द्यू२३४ताम्। शुक्रान्दू२३४दू।
ह्रे आ३। ह्रे२आ२३४औहोवा। ह्रा२३४याः। पयाः
सा२३४हा। ससा३। सा२सा२३४औहोवा। आ२३
४र्षीम्॥(१) अयम्। एआयाम्। सूर्यई। वा३।
आ२यिवा२३४औहोवा। पा२३४इक्। अयाꣳसा२३४

* ऊ० गा० १४प्र० २ख० १गा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रा। सिधा३। सा२यिधा२३४औहोवा। वा२३४ती। सप्नाप्रा२३४वा। तआ३। ना२आ२३४औहोवा। ही२३४वाम॥(२) अग्रम। एआयाम। विश्वानि। ता३यि। ना२यिता२३४औहोवा। ष्ठा२३४ती। पुनानो२३४भू। वनो३। वा२नो२३४औहोवा। पा२३४री। सोमोदा२३४यिवाः। नस्तू३। ना२स्तू२३४औहोवा। री२३४याः॥२ *॥ [८]

॥ धुरासाकमश्वम्॥ अस्यप्रत्ना३म्। हौ३हो३१यि। अनुद्यु ता३म्। हौ३हो३१यि। शुक्रन्दुदू३। हौ३हो३१। द्रे अद्रुया३ः। हौ३हो३१यि। पयःसहा३। हौ३हो३१। ससाम्ऋषा३यिम्। हौ३हो३१२३४५ई। डा॥(१)

* ऊ० गा० १४प्र० १ख० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयꣳसूर्य्या३ः। हौ३हो३१यि। द्रुवोपदृ३क्। हौ३हो३१। यि। अयꣳसरा३। हौ३हो३१। सिधावता३यि। अयꣳसराꣳसिधा। हा३हा३यि। वा२३४तायि। साप्ना३उवा३। प्रा२वा२३४औहोवा। तआर्दियि। हौ३हो३१यि। सप्नप्रवा३। हौ३हो३१। तआदिवा३म्। हौ३हो३१२३४५ई। डा॥(२) अयंविश्वा३। हौ३हो३१। नितिष्ठता३यि। हौ३होयि। पुनानोभू३। हौ३हो३१। वनोपरा३यि। हौ३हो३१यि। सोमोदेवा३ः। हौ३हो३१। नसूरिया३ः। हौ३हो३१२३४५ई। डा॥ ३ *॥ [९]

॥ विलम्बसौपर्णम्॥ अस्यप्रत्नामनुद्युतम्। ईयइयाहायि। शुक्रन्दुदुह्रेआ। हा३हा३। ह्रा२३४

* ज० मा० १४प्र० २ख० २सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ १ १ २ ५र र २ र
याः । पाया३उवा३ । सा२हा२३४औहोवा । स्वसाम्हं

२ १ १ १ १ २ १ र १र १ २१ २
पा२३४५यिम ॥(१) अयꣳसूर्य्यइवोपहक् । ईयइवाहा

४ २ ४र ५र २ १ १ ५
यि । अयꣳसराꣳसिधा । हा३हा३यि । वा२३४तायि ।

१ २ २ १ ३ ५र र २ र
साप्ता ३ उवा ३ । प्रा २ वा २ ३ ४ औहोवा । तआदि

२ १ १ १ १ २ १ र २ १ १ १ २
वा२३४५ुम् ॥(२) अयंविश्वानितिष्ठति । ईयइयाहायि ।

४ र १र ४ ५र २ २ १ ५ १ २
पुनानोभुवनो । हा३हा३यि । पा२३४रायि । सोमा३

२ १ ३ ५र र २ र २
उवा ३ । दा २ यिवा २ ३ ४ औहोवा । नसूरिया २ ३

४ ५ः ॥ ४॥ [१०] १६

अथ चतुर्थी† ।

२ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः ।

१ २ ३ १ २
हरिःपवित्रेअर्षति ॥ १‡ ॥

* ऊ० गा० १४प्रा० २ख० ४सा० ।

† मूलेलियं सप्तदशसूक्तस्य प्रथमा, विवरणादि-मतेप्येवमेव । तथैवात्रोत्तरत्र बोध्यम् ।

‡ इयमत्रैव पुनः श्रोष्यमाणा पञ्चम-द्वितीय-द्वितीय-नवमी । ऋ० वे०६, ७, ११, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हरिः" हरितवर्णः "देवः" द्योतमानः "एषः" सोमः "प्रत्नेन" पुराणेन "जन्मना" जननेन* "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" "अर्षति" आरोचते ॥ ४ ॥

अथ पञ्चमी।

३ १ २ ३ २ ३ १ २   ३ २ ३ १ २ ३ १ २

एषप्रत्नेनमन्मनादेवोदेवेभ्यस्परि।

३ १र २र

कविर्विप्रेणवावृधे ॥ २ ॥

"प्रत्नेन" पुराणेन "मन्मना" साधनेन स्तोत्रेण युक्त इति शेषः† "देवः" द्योतमानः "एषः" सोमः "देवेभ्यः" देवार्थं "कविः" मेधावी सन् "विप्रेण" मेधाविना यजमानेन ऋत्विजा "परिवावृधे" परिवर्द्धते ॥ ५ ॥

अथ षष्ठी‡।

३ २ ३ १र   २र ३ ३ ३ १ २

दुहानःप्रत्नमित्पयःपवित्रेपरिषिच्यसे।

१ २ ३ १   २

क्रन्दन्देवाँ॒अजीजनः ॥ २ ¶ ॥ १७

---

* 'जन्मना—कर्मणा, नाम्ना वा'—इति वि०।

† 'मन्मना—मन्म बलमभिधीयते, बलेन'—इति त्रि०।

‡ मूले त्वेतदन्तमेव सप्तदशं सूक्तम्, विवरणादि-मतेऽप्येवमेव।

¶ ऋ० वे० ६, ८, १२, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्रत्नमित्" पुराणमेव "पयः" रसं * "दुहानः" हे सोम! पवित्रे परिषिच्यसे। हे सोम! त्वं "क्रन्दन्" शब्दं कुर्वन् "देवान्" इन्द्रादीन् "अजीजनः" स्वसमीपे जनयति। यत्र सोमोऽभिषुते तत्र देवा नियतं प्रादुर्भवन्तीत्यर्थः॥

"अजीजनः"-"अजीजनत्"—इति पाठौ †॥ ६॥ १७

अथ सप्तमी ‡।

१ २ २ १ २ ३ २ ३ १ २ ३ १ २
उपशिक्षापतस्थुषोभियसमाधेहिशत्रवे।
१ २ ३ २ ३ २
पवमानविदारयिम्॥ १ ¶॥

हे "पवमान" सोम! "उपशिक्ष" त्वं समीपे कुरु। कान्? "उपतस्थुषः" उपक्रम्य स्थितानस्मदभिमतानित्यर्थः। "शत्रवे" शत्रुषु अस्मद्विरोधिषु "भियसं" भयम् "आधेहि" कुरु जय। किञ्च तेषां शत्रूणां "रयिं" धनं "विदाः" § अस्मभ्यं विद्धि देहीत्यर्थः॥ ७॥

---

* 'पयः—स्वादुद्रव्यम्, अथवा पय उदकं क्षीरं वा'—इति वि०।

† "पिच्यम्"-"पिच्यते"—इत्यपि पाठभेदः।

‡ मूले त्रियमष्टादशसूक्तस्य प्रथमा, विवरणादिमतेऽप्येव भेव। तथैवातोत्तरत्र बोध्यम्।

¶ ऋ० वे० ९, ८, ९, ५।

§ 'विदज्ञाने, विद्लृलाभे, विदसत्तायामित्यस्येदं रूपम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अष्टमी-नवम्योर्ऋचोः प्रतीकमेव माम्नातम्—"उपोषु-जातमप्तुरम्"—इति, "उपास्मैगायतानरः"—इति च॥

तेष्वष्टमी प्रदेशान्तरे* आम्नाता—

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र

उपोषुजातमप्तुरं(गोभिर्भङ्गम्परिष्कृतम्।

१ २ ३ १ २

इन्दुन्देवाअयासिषुः)॥ २ †॥

"जातं" सम्यक् प्रादुर्भूतम् "अप्तुरम्" वसतीवरीभिः अद्भिः प्रेरितं "भङ्ग" शत्रूणां भञ्जकं "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतं संस्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उप उ"—इति निपातद्वयसमुदायः उपेत्यस्यार्थे वर्त्तते सुष्ठु "उप अयासिषुः" उपागच्छन्ति॥ ८॥

नवमीत्वेव मन्यत्राम्नाता‡—

१ २ ३ १ २ ३ १ २

उपास्मैगायतानरः(पवमानायेन्दवे।

३ २ ३ १ २र

अभिदेवाँइयक्षते)॥ ३ ¶॥ १८

---

* अत्रैव पञ्चमे इति बोध्यम्। परमाचार्यमेतत्—भविष्यत्पाठस्य पूर्वम्प्रतीक-प्रदर्शनमिति।

† छ० आ० ६, १, १, १ (२भा० ४२ पृ०)—अत्रैव ५, २, १०, १—ऋ० वे० ७, १, २०, ३।

‡ उत्तराग्रन्थारम्भे एव।

¶ अत्रैव १, १, १, १ (२भा० ४पृ०)—ऋ० वे० ६, ७, ३९, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "नरः" नेतारः! यज्ञस्य "देवान्" इन्द्रादीन् "अभि इयक्षते" आभिमुख्येन यष्टुमिच्छति यजमानाय चरते "अस्मै" अभिषूयमाणाय "इन्दवे" सोमाय "उप गायत" उपगानं कुरुत॥ ८॥ १८

१ र १ २र १
॥ अध्यम्॥ उपोषुजा२तम्। अप्तुरोवा। गोभि

२ १ २ ३ २ १ २र १र ३
र्भङ्गाम्। परिष्कृताम्। इन्दुर्देवाअ। या२३। सि

२ १र १ २र १
षाउवा। औ्रधिया२॥(१) तमिद्वर्द्धा२न्तु। नोगिरो

२ १ २ १ १ ३र २ १ २ १
वा। वत्सꣳसꣳशायि। स्वरीरिवा। यइन्द्रस्यहृ। दा

२ १र १ र
२३म्। सनाउवा। औ्रधिया२॥(२) अर्षानःसो२म।

१ २ १ २ १ १ ३र ११ र १
शङ्गवोवा। धुक्षस्वपायि। प्युषीमिषाम्। वर्द्धास्मु

१ २ १र २
द्रम्। ऊ२३। क्थियाउवा। औ्रधियार। ए२३हिया

१
३४३। औ२३४५ई। डा॥ ५ *॥ [१]

१ र २ र
॥ प्रतीचीनेडङ्काशी॥ उपोषुजातम्। आ२प्त

* ऊ० गा० ६प्र० २ख० ५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ ० १२ २
राम्। गोभिर्भंक्षम्। परायिष्कृता२३४म्। हाहो

१ २ १ २ १ ४ ५
यि। इन्दुन्देवाआ३या। सिषू। औ२३होवा॥(१)

१ २ १ २ १
त्वमिद्धर्न्तु। नो२गिराः। वात्सऽस्वऽग्नि। स्वरायि

० १२१ १ १ २ १
दिवा२३४। हाहोयि। यइन्द्रस्याहा३र्हाम्। सनायिः।

४ ५ १२२२ १
औ२३होवा॥(२) अर्षानःसोम। शा२ङ्गवायि। धू

२ १ ० ३२१ १२ २
स्तपि। प्युवायिमिषा२३४म्। हाहोयि। वर्द्धास मूद्रा

२ १ २ ४ ५ ४ ५
३मू। क्रियया। औ३होवा। ई३डा(३)॥ ११॥ [२]

४ १ २ ४ २ ४२ ५
॥ यज्ञायज्ञीयम्॥ उपाऽऽप्सूमै। गा३या३तानाराः।

२ १ २ २ १ २ १ २ २
पा३वामा३ना। या२३आ। ऊम्मायि। दा३वायि।

१ २२ ३२ १ २ १२ २
आभिदेवाऽइया२च्चताउ॥ ते(१)आ। भितेमा। धू३

१ २ २ १ १२ २ २ १
नापा३याः। आथा२र्वा। णोआ२३णा। ऊम्मायि।

२ २ १ २ २ ३ २ १ २ १
आ३यूः। दायिवन्देवायदा२यिवयाउ॥ यू(२)साः। नः

* ऊ० गा० १८प्र० २ख० ११मा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ १ १र २
पवा। स्वा३श्राङ्गा३वायि। शञ्चा२ना। यशा२३मा।
१ २ २ १ र र ३ १
ऊम्मायि। वी३तायि। श्रा(२)राजन्नोषधार२यिभ्यश्राउ।

॥ ११ * ॥ [३]

२ १ १ ४ र ५ २ २ ५ २ १
॥ सफम्॥ उपश्री३त्वाप। तस्थू२३४षाः। भिया
र १ २ ४ २ ५ २ १
सा२म्। आधायिही३श्रा३। त्वा३२३४वायि। पवा।
र २ ४ २ ५
मानावी३दा३ः। रा३४५योहहायि॥२ †॥ [४] १८

इति सामवेदार्थ-प्रकाशे उत्तरायन्थस्य द्वितीयस्याध्यायस्य

पञ्चमः खण्डः‡ ॥ ५ ॥

---

* ऊ० गा० २१प्र० २ख० ११सा०।

† ऊ० गा० २१प्र० १ख० २सा०।

‡ 'प्रथमस्याश्चोबह्रिष्यवमानमुक्तम्। तृहत्स्तौमिकवेदमषः प्रस्तवतो भिचोपवती भिच बहिष्पवमानम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



षष्ठे खण्डे *—

प्रथमतृचे, प्रथमा ।

१ २र ३ १२ १२ २१२

प्रसोमासोविपश्चितोपोनयन्तऊर्मयः ।

१२ ३१२

वनानिमहिषाइव ॥ १† ॥

"विपश्चितः" मेधाविनः "ऊर्मयः" प्रवृद्धाः "सोमासः" सोमाः "अपः" वसतीवर्याख्याः "प्र नयन्ते" प्राप्नुवन्ति । तत्र दृष्टान्तः—"वनानि महिषा इव" यथा प्रवृद्धा मृगा वनानि प्राप्नुवन्ति तद्वत् ॥

"अपोनयन्ते"-"अपांनयन्ति"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २र ३ १२ ३ १ ३ २३ १२

अभिद्रोणानिबभ्रवःशुक्राऋतस्यधारया ।

२ ३ १२

वाजङ्गोमन्तमक्षरन् ॥ २‡ ॥

---

० 'इदानीं माध्यन्दिनः पवमानो यज्ञस्य, स च त्रिच्छन्दा उक्तः । स च उच्यते—प्रसोमास इति'—इति वि० ।

† ऋ० ब्रा० ५, २, ५, १ (२भा० ९१पृ०)=ऋ० वे० ९, ९, ३३, १ ।

‡ ऋ० वे० ९, ८, ३३, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अभि" चरन्तीति शेषः अभि शब्दश्रुतेरुचित-क्रियाध्याहारः। किम्प्रति? "द्रोणानि" द्रोणकलशान् * [यद्यपि द्रोणकलशएकएव तथापि तत्प्राधान्यादितराण्यपि पात्राणि द्रोणानीत्युच्यन्ते। अथवैकस्मिन्नेव पूजार्थं बहुवचनम्। के "बभ्रवः" बभ्रुवर्णाः सोमाः "शुक्राः" दीप्ताः। केन प्रकारेण? "धारया" धाराकारेण। कस्मै प्रयोजनाय? † ॥ २ ॥

अथ तृतीया।

२ १ १२ २ १२१२ २ १ १
सुताइन्द्रायवायवेवरुणायमरुद्भ्यः।

१ २ २ १ १
सोमाअर्षन्तुविष्णवे ॥ ३ ‡ ॥ १९ ¶

"सुताः" अभिषुताः सोमाः इन्द्रादिदेवार्थम् "अर्षन्तु" गच्छन्तु§ ॥

"'अर्षन्तु'-'अर्षन्ति'—इति पाठौ ॥ ३ ॥ १९

---

* 'द्रोणानि—द्रोणकलश सम्बन्धानि चरु-चमसादीनि पात्राणि, तानि'—इति वि०।

† परमात्मने। ‡ ऋ० वे० ६, ८, ११, १।

¶ 'अर्चं गायत्री भवति'—इति वि०। § पूर्ववदाम्नायः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ १२
॥ आश्वम् * ॥ अभिद्रोणा २निबभ्रवाः। युक्तात्रतस्य

२ १ २२१ २ २ १ ऽ २
धारा २या। वाजङ्गोमा२३ न्ताम्। आचा ३ उवा ३।

१ १ १ १
रा२३४५न्(२) ॥ ११ † ॥ [१]

१ २ ऽ २ २ १
॥ सोमसाम ‡ ॥ सुताइन्द्रा। यवायवायि। वारु

२ २ २ ३ १ १ २ ५ ५
णाया३मा३। रुड्मियाः। सोमाआर्षा३४। द्वाउ। तु

४
वा५यिष्णवायि। द्वो५ई। डा(३) ॥ १२ ¶ ॥ [२]

१२ २ १ २ १२
॥ आश्वम् ॥ प्रसोमासो २विपश्चिताः। अपोनयन्त

२ २ २ १२ २ ३ २ ११
ऊर्म्मा २याः। वनानिमा२३ही। पा३उवा३। वा२३-

११ १ २ १ ३ १२ २
४५ ॥(१) अभिद्रोणा २निबभ्रवाः। युक्तात्रतस्यधारा

१ १२१ २ ० १ १ १
२या। वाजङ्गोमा२३न्ताम्। आचा३उवा३। रा२

१११ १ २ २१ २
३४५न् ॥(२) सुताइन्द्रा २यवायवायि। वरुणायमरुड्मा

* "आश्वसूक्तम्"—इति ख० पु० पाठः। † ऊ० गा० १प्र० २ख० ११सा०।

‡ "गायत्रीसोमसाम"—इति ख० पु० पाठः। ¶ ऊ० गा० १प्र० २ख० १२सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र१र १ ऽ २ ११
२याः । सोमापर्षा२३ह्व । वायिष्ठा२उवा३ । वा२३
११
४५यि(३) ॥ १२ * ॥ [३]

१ र २र१र २ २
॥ आष्ठुभार्गवम् ॥ प्रसोमासोवि । पश्चा३यिताः ।
१र २ १ ३ ५ १ २
आपोनया३ । ताऊ२र्म्मा१२३४याः । वनाना१यिमा२ ।
३२ १ ५ ५ २ १र र
द्विषा३ः । आ२३४यिवो६हायि ॥(१) अभिद्रोणानि ।
२ २ १ र २ १ ३ ५ १र
बभ्रा३वाः । ष्टक्राक्ता३ । आधा२रा२३४या । वाजा
२ ३२ १ ५ ५ २ १र र
ङ्गो१मा२ । तमा३ । त्वा२३४रो६हायि ॥ सुताइन्द्रा
२र २ १ र२ १ ३ ५
य । वाया३वायि । वारुणाया३ । मारु२ङ्गा१२३४याः ।
१र २ ३२ १ ५
सोमाआ१र्षा२। तुवा३यि । ष्णा२३४वो६वायि(३)॥११†॥[४]

१र र१ २ १ २१ २१
॥ जराबोधीयम् ॥ प्रसोमासोवा । वायिपश्चिताः । अपो
२ र १ २ ४ऽ ५र
ना२३या । तऊर्म्मायाः । वनाना१यिमा२३हायि । षाः ।

---

* ऊ० गा० ६प्र० २अ० १२सा० ।

† ऊ० गा० ११प्र० २अ० ११सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ र १ २ १ २ १
हुवो३४५ई। डा ॥(१) अभिद्रोणीवा। नायिबभ्रवाः।

२ १ २ र १ र २ ४
द्रुक्का आ२३र्त्ता। स्वधाराया। वाजाङ्गो१मा२३न्ताम्।

५ ३ २ २ र १ २ १ र २
च। चरो३४५ई। डा ॥(२) सुताइन्द्रोवा। यावाय

१ २ १ २ १ र २
वायि। वरूणा२३या। मरुद्भायाः। सोमा आ१र्षा

४ ५ ३ २
२३न्तू। वि। ष्णवो२३४ई। डा(३) ॥ १२ * ॥ [५]

१ २र ३ २ १
॥ सोमसाम † ॥ प्रसोमासाः। विपाश्चिताः। आपो

२ २ २र ३ २ १ २ ५
नाया२न्ता३यि। ऊर्म्मयः। वानानायिमा३४। हाउ।

४ १ २र १ २ १
हिपा५इवा ॥(१) अभायिद्रोणा। निबाभ्रवाः। द्रुक्का

२ २ २र ३ २ १ २ ५
आर्त्ता३स्वा२। धारया। वाजाङ्गोमा३४। हाउ।

५ १ २ ३ २ १
तमा५च्चरान् ॥(२) सुताइन्द्रा। यवायवायि। वारू

२ २ २ ३ २ १ २ ४ ४
णाया३मा३। रुद्भियाः। सोमाआर्षा३४। हाउ। तु

४
वा५यिष्णवायि। हो५ई। डा(३) ॥ १३ * ॥ [६]

---

* उ० गा० १४प्र० १ख० १२सा०। † "गायत्रीसोमसाम"—इति ख० पु० पाठः।

‡ उ० गा० १४प्र० १ख० १३सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ रौहितकुलीयम् * ॥ प्रसोमासोविपाः। चिता२ः।
अपोनयन्तऊर्म्मा२३याः। वाना२नायिमा२३। हिषो२
३४वा। आ५यिवो६हायि ॥(१) अभिद्रोणानिबा। भ्रवा
२ः। धूउक्राऋतस्यधारा२३या। वाजा२ङ्गोमा२३।
तमो२३४वा। आ५रो ६ हायि ॥(२) सुताइन्द्रायवा।
यवा२यि। वरुणायमरुद्भ्या२३याः। सोमा२आर्षा२३।
तुवो२३४वा। आ५वो६हायि ॥ १४ † ॥ [७]

॥ मार्गीयवाद्यम् ॥ प्रसौहोवा। मासो२। विपा
श्चा२३४यिताः। अपोनय। तऊर्म्मा१या२ः। वना।
हा। औ३होयि। ना२३४यिमा। हा२यिबा२३४औ
होवा। ए३। डुवा२३४५ ॥(१) अभौहोवा। द्रोणा
२। निबाभ्रा२३४वाः। धूउक्राऋत। स्याधा१राया२।

* "रौहित कुलीयोत्तरम्"—इति ख०पु०पाठः। † ऊ० गा० १४प्र० १ख० १३गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ २ २ ५ १ २
वाजम् । हा । औ३होयि । गो२३४मा । ता२मा२

५र २ २ १ १११२ २ र १ २
३४औहोवा । ए३ । न्नरा२३४५न् ॥(२) सुतौहोवा ।

१ ३ २ ३ ५ १ २र १ २
सायिन्द्रा२ । यवाया२३४वायि । वरुणाय । मरुद्भ्या१

१र र २ २ ३ ५
या२: । सोमा: । हा । औ३होयि । आ२३४र्षा ।

१ २ ५र र २ १ ११११
तू२वा२३४औहोवा । ए३ । च्युवा२३४५यि (३)॥ ११*॥[८]

१ र र र ४
॥ आभीकम् ॥ प्रा२३४सोमासो५ । विपौहोश्चायि

५ १र २ २ २ र २ ५
ता: । अपोनयन्तऊ१र्म्मा३या: । वनामा २ ३ ४ यिमा ।

१ ऽ २ २ ५ १
हायिषा३उवा२३४३ । आ३४५यिवो६हायि ॥(१) आ२३४

र र ४ ५ १ २ २ २
भिद्रोणा५ । निबौहोभ्रावा: । पूएक्रातस्यधा१रा३या ।

र २ ५ १ ऽ २ २
वाज़्ङ्गो२ ३ ४ मा । तामा३उवा२४३ । हा३४५रो६हा

५
यि (२)॥ १५ †॥ [९]

ऽर र १ २ १ २२
॥ ऐडसौपर्णम् ॥ प्रसोमासोवा । वायिपश्चा२३४यि

---

* ऊ० गा० १८प्र० १ख० ११सा० । † ऊ० गा० १८प्र० १ख० १५सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ताः। अपोनञा। तऊरम्मा२३४याः। वा२ना। ना२३यिमा। हायिषाइवा। औ३होवा ॥(१) अभिद्रोणा वा। नायिबभ्रा२३४वाः। शुक्राऋता। स्वधा२रा२३ ४या। वा२जाम्। गा२३मा। तामचरान्। औ२ ३होवा ॥(२) सुताइन्द्रोवा। यावाया२३४वायि। वरू णाया। मरुद्भा२३४याः। सो२माः। आ२३र्षा। त्वविष्णवा। औ३होवा। हो५ई। डा (३)॥१६* ॥[१०]१९

अथ प्रगाथात्मके—

द्वितीयसूक्ते, प्रथमा।

प्रसोमदेववीतयेसिन्धुर्नपिप्येअर्णसा।

अंशोःपयसामदिरोनजागृविरच्छाकोशम्मधुश्चुतम्॥१†॥

---

* ऊ० गा० १९प्र० २ख० १६गा०।

† छ० आ० ६, १, ३, ४ (२भा० ८६पृ०)=ऋ० वे० ७, ५, १४, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "सोम!" त्वं "देववीतये" देवानां पानाय तदर्थम् "अर्ण-सा" वसतीवर्याख्येन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः— "सिन्धुः न" यथा सिन्धुः उदकेन प्रपिप्ये प्रप्यायते तद्वत् [प्यायते-र्लिटि "लिड्यङोश्च(६,१,२९)"—इति पी-भावः], स त्वं "मदिरो न" मदकारः सुरादिरिव "जागृविः" जागरणशीलः। यद्वा, नेति सम्प्रत्यर्थे। इदानीं मदकरो जागरणशीलस्त्वम्। "अंशोः" लताखण्डस्य "पयसा" रसेन "मधुश्चुतं" मधुर-रसस्य चारयितारं "कोशं" द्रोणकलशम् "अच्छ" अभि गच्छसि॥ १॥

अथ द्वितीया।

१ २ ३ १र २र  ३ १ २  ३ २ ३ १र  २र
आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः।
१ २  ३ १ ३ २ २ १ २ ३ १र  २र
तमीꣳ हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः॥ २*॥ २०†

"हर्यतः" स्पृहणीयः "प्रियः" प्रीणयिता "सूनुर्न" सूनुरिव "मर्ज्यः" मार्जनीयः "अर्जुनः" श्वेतवर्णः‡ सोमः "अत्के" रूपे विचित्रे¶ "आ अव्यत" आवृणोति "तम्" "ईम्"§

---

* ऋ० वे० ७, ५, १४, ३।

† 'अत्र यौधाजयं साम'—इति वि०।

‡ 'अर्जुनः—तृणसवर्णः। "एतानि अर्जुनानि सोमप्रतिनिधौ" तस्मादर्ज्जुन इत्युक्तम्'—इति वि०।

¶ 'अत्के—निक्ते. सोमप्रक्षालित'—इति वि०।

§ 'तम् ईम्—इति पदपूरणः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एनं सोमम् अङ्गुलयः "नदीषु" नदमानासु वसतीवरीषु "गभस्त्योः" वाह्वोः "आ" आभिमुख्येन "हिन्वन्ति" प्रेरयन्ति। तत्र दृष्टान्तः—"अपसः यथा" वेगवन्तः शूराः जनाः "रथं" सङ्ग्रामेषु प्रेरयन्ति तद्वत्॥

"अर्जुनः"-"अर्जुने"—इति पाठौ॥ २॥ २०

॥ यौधाजयम्॥ प्रसो३१। मा३दे। व। वायि
ता२३४यायि। सायिन्धू३ः। नपा२यि। प्येषा३४५।
णा२३४सा। अ२श्रोःपया। सा। मदिरो२। नजा
३४५। गृ२३४वीः। अक्षा२। कोश्रा२म्। मधू३४५।
स्रू२३४ताम्॥(१) अच्छा३१। को३श्रम्। म। धूस्रू२
३४ताम्। आच्छा३। कोश्रा२म्। मधू३४५। स्रू२
३४ताम्। आचार्यतो। अ। र्जुनोआ२। त्कोआ३
४५। व्या२३४ता। प्रिया२ः। इन्दू२ः। नमा३४५।
जौ२३४याः॥(२) प्रिया३१ः। इ३न्दुः। न। मोर्ज्जा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ १र २ २ २

२३४याः । प्रायाउ: । ह्वन् २ः । नमा३४५ । जौ२३४

५ २ १ २ १ २ १ १ २

याः । नमायिऽहिन्वा । ति । अपसोर । यथा३४५ ।

२ ५ २ १ २ २ २

दा२३४याम् । नदा२यि । षूबा२ । गभा३४५ । स्तो

२३४यि ाः(३) ॥ १२ * ॥ [१]

४ ३ ५ २ ५ र २ १

॥ वज्रम् ॥ प्रसो४म । दा४यिबवो । तया३यि ।

४ ५ २ र १ २ १ र २

स्वायिन्धूः । नपायि । प्ये आणासा३ । आऽभ्रोःपया

१र २ ५ र २ १ २ ५

३ । सामा२दा२३४यिराः । नजा । गृवौवा३ओ२३४वा ।

र १र २ ३ ५ ४ ४

अक्षा । कोशौवा३ओ२३४वा । मधूपूस्रुताम् ॥(१) अ

२ ५र २ १ ३ २ ४ ५ १र

क्षा४को । शा४मधु । स्रुता३म् । आक्षा । कोशाम् ।

१ २ १ २ १ २ ५ र

मधूस्रूता३म् । आद्दर्य जौ३ । अर्जू२नो२३४आ । त्वे

१ २ २ ५ २र २ ३ ५

अ । व्यजौवा३ओ२३४वा । प्रियः । ह्वनौवा३ओ२३४वा ।

४ ४ ३ ५र २ ५ १ २

नमापूर्जियाः ॥(२) प्रिया४ःह्व । नू४र्न्नम । जिया३ः ।

* ऊ० गा० १प्र० १ख० ११गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रायाः। प्रायाः। ह्वनूः। नमाज्ज्यायाः३ः। जामीं
ह्निन्वा३। तियार्पार२३४साः। यथा। रथीवाश्रौर२३
४वा। नदी। धुवौवाश्रोर२३४वा। गभापुस्तियोः। हो
५ई। डा (३)॥ १२ * ॥ [२]

॥ अभीवर्त्तः॥ प्रसो३मा३देववीतयोवा। सायिन्धु
र्न्पि। प्येश्राणी१सा२। श्राँशोःपया३१२२३४। सा
मदिरः। नजागृ१वी२ः। अच्छाको१शा२म्। मधु३।
श्रू२३४५। ता२३४५म्(१)॥ १३ † ॥ [३]

॥ गौगवम्॥ प्रसोमा३देववीतयायि। सायिन्धूरः।
नपिप्येश्रा३। णासा। श्रँशोःपयसामदा२३यिरो२।
नजा३गृवीः। श्रँशोःपयसामदिरः। नजा३गृवीः।

* ऊ० गा० ६प्र० २ख० १२सा०।

† ऊ० गा० ८प्र० १ख० १३सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र २र  १  २ २  १ ५ ४
आच्छाको । भा । औ३हो । मधो२३४वा । सू५तो

६हायि(१) ॥ १७* ॥ [४]

१ र १ र १ र २ १
॥ पृश्निपृश्नीयाद्यम् † ॥ प्रसोमदेववीतयायि । सि

२र १  २  १ र  र २ २र
न्धुर्नपिप्ये अर्णा२३सा । अ९शोःपयसामदिरोनजागृ२३

२  १र  २  १  ३२  ५रर
वीः । अच्छाको२३भा३म् । मा२ । धुश्चू३४औहोवा ।

३ १ १ १ १
ता२३४५म् (१) ॥ १८ ‡ ॥ [५]

५ र २  ४र५४र ५  १
॥ गौङ्गवम् ॥ प्रसोमा३देववीतयायि । सायिन्धू

१  २र २  ४ ५  २ १र  र
२ः । नपिप्ये आ३ । र्णासा । अ९शो पयसामदा२३यि

१  २ २  ४ ५  २ १र  र  ३ १
रो२ । नजा३गृवीः । अ९शोःपयसामदिरः । नजा३

४ ५  १  र २र  १  २  २  १  ५
गृवीः । आच्छाको । भा । औ३हो । मधो२३४वा ।

४  ५  ५ र २  ४ ५ ४  ५  १
सू५तो६हायि ॥(१) अच्छाको३भम्मधुश्रुताम् । आच्छा

१र  २ १  ४ ५  २र १  र
२ । कोभम्मधू३ । श्रूताम् । आहर्यतोअर्जुनो२३

* ऊ० गा० ९प्र० २ख० १०सा० । † "पदान्तःपृश्नपृश्नीयम्"—इति ख०पु० पाठः ।
‡ ऊ० गा० ९प्र० २ख० १८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ३र २ ४ ५ २र १ र र र
अ।२। त्को आ३व्याआ। आहय्यं तौअञ्ज् नोअ। त्को
२ ४ ५ १ १र १ २ २ १
आ३व्याता। प्रायःस्व। ना। औ३हो। नमो२ ३ ४
५ ४ ५ ५ २ ४ ५ ४ ५ १
वा। जा५यो६हायि॥(२) प्रियःस्व३नुर्न्न मर्जियाः। पा
१र ३ २ ४ ५ २ १र
या२ः। स्वनुर्न्न मा३। जायाः। तमीं हिन्वन्त्यपा२३
१ ३ २ ४ ५ २ १र ३ २
सो२। यथा३रायाम्। तमीं हिन्वन्त्यपसः। यथा३
४ ५ १ र २ १ २ २ १ ५
रायाम्। नारीषु। आ। औ३हो। गभो२३४वा।
४ ५
स्ता५यो६हायि(३)॥ १७ *॥ [६]

२ १ २ ४५ ५
॥ यौधाजयेत्तारान्त्तम्॥ प्रसो३१। मा३दे। व।
२ ३ ५ १ २ १ र
वायिता२३४यायि। सायिन्धू३ः। नपाऽ२यि। प्येअ
३ १ १ १ १ २ १ २ १ २र १
र्णा३४५। सार३४५। अञ्शोःपया। सा। मदिराऽ२।
र ३ १ १ १ १ २ १
नजागृ३४५। वी२३४५ः। अच्छा२। कोशाऽ२म्।
३ १ १ १ १ २ १ २ ४
मधुश्च३४५। ता२३४५म्॥(१) अच्छा३१। को३शम्।

* ऊ० गा० ११प्र० १अ० १०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ १ ५ १ २ १र
म । धुश्चू२३४ताम् । आच्छा३ । कोशाऽ२म् । मधु

३ १ १ १ १ २र १ २ १ २ १ र
श्चू३४५ । ता२३४५म् । आहार्य्यतो । अ । जुनोआ

र ३ १ १ १ १ १ १
ऽ२ । त्कोअव्या३४५ । ता२३४५ । प्रिया२ः । ह्वनूऽ२ः ।

३ १ १ १ १ ३ १ २ ४ ५
नमर्ज्जा३४५ । या२३४५ः ॥(२) प्रिया३१ः । ह्व३नुः । न ।

२ ३ ५ १ २ १र
मार्ज्जा२३४याः । पाया३ः । ह्वनूऽ२ः । नमर्ज्जा३४५ ।

३ १ १ १ १ २ १ २ १ १ १ र
या२३४५ः । तमायिर्ण्दिन्वा । ति । अपसोऽ२ । यथा

३ १ १ १ १ १ १ २
रा३४५ । था२३४५म् । नदा२यि । षूवाऽ२ । गभ

३ १ १ १ १
स्ता३४५ । यो२३४५ः(३) ॥ १५ * ॥ [७]

५ र २ ४र५४र ५ १ २
॥ द्वैगतम् ॥ प्रसोमा३देववीतयायि । सायिन्धुर्न्न

र १ २ ३ २ ५ २ २ १
पि । प्ये‍आर्णा१सा२ । अ‍ंशोः३ । हौ३हो३वा । पय

र र २ १ १ ३ ५र
सामदिरोनजागृ१वी२ः । अच्छा२३ । को२शा२३४औ

---

* ऊ० गा० १४प्र० १ख० १५सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



होवा। ए३। मधू२स्सुता२३४५म् ॥(१) अच्छाकोऽ
३भ्मधुश्च्युताम्। आच्छाकोशम्। मधूश्च्युता२म्।
आहा३। हौ३हो३। वा। यतोअजुनोअन्के अव्याता
२। प्रियार३:। ह्वरेना२३४औहोवा। ए३। नमा२
र्जिया२३४५: ॥(२) प्रियःह्वरनुर्न्नमर्जिया:। प्रायःह्वनु:।
नमार्ज्जा१या२:। तमा३यिम्। हौ३हो३वा। द्दिम्ब
न्त्यपसोयथारा१था२म्। नदा२३यि। षूर्वा२३४औ
होवा। ए३। गभा२स्त्रियो२३४५:(३) ॥ १२ * ॥ [८]

॥ पौरुहन्मनम् ॥ प्रसोमा३देववीतयायि। सायि
न्धुर्नपि। प्येअर्णा१सा२। णासा२। आ१औ:पय।
सा। मदिरो३। मदिरो३। जाजागृ२३४वी। आ

---

* ऊ० गा० १८प्र० १खा० ११ख० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ८ १ १ १ ५ ४
चक्राकोशाम्। माधुश्चू२३४ताम्। मधूपश्चुताम् ॥(१)

५ र २ ४ ५४ ५ १ र २र १ १
अचक्राको३शम्मधुश्च्युताम्। आच्छाकोशम्। मधूश्चू

१ १ १ १ऽ र
१ता२म्। श्चूता२म्। आहर्य्यतः। आ। जुनो

२ १ र २ १ २ २ ५ १ २र १
आ३। जुनोआ३। त्कोअव्या२३४ता। प्रायःसूनूः।

१ २ ३ ५ ४ ५ २ ४ ५
नमाऽऽर्जा२३४याः। नमा५ऽऽर्जियाः ॥(२) प्रियःसू३नुर्न

४ ५ १ २र १ १ १
मर्जियाः। प्रायःसूनुः। नमाऽऽर्जा१या२ः। जाया२ः।

१ र २ २ऽ २ १ २ १ २
तामीऽऽहिन्व। तायि। अपसो३। अपसो३। याथा

३ ५ १ २र १ २ ३ ५ ४
रा२३४थाम्। नादीषुवा। गाभस्ता२३४योः। गभा

४
५स्तियोः। होपूई। डा(३) ॥ १३ * ॥ [९]

१ र र र १
॥ हारायणम् ॥ प्रसोमदेवी२यिववीतयायि। सा

र र २ २ १र
यिन्धुर्न्नपिप्येअर्णसा। शोःपा३या। सामदिरो। न

---

* ऊ० गा० १८प्र० १ख० १२सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



जाउहा। गृवी२:। अच्छाकोशम्मधोवा३ओ२३४वा।
सूतो६हायि॥(१) अच्छाकोभौहो२यिमधुश्चुताम्। आ
च्छाकोशम्मधश्चुतम्। आहार्या३तो। अर्ज्ज्नोआ।
त्केआ३हा। व्याता२। प्रियःसूनुर्न्नमोवा३ओ२३४वा।
जा५ये।६हायि॥(२) प्रियःसूनौहो२यिनमर्ज्जिया:। प्रा
यःसूनुर्न्नमर्ज्जिय:। तमायिꣳहा३यिन्चा। तियपसो।
यथा३हायि। राया२म्। नदीषुवागभोवा३ओ२३४वा।
स्ता५यो६हायि(३)॥ १४*॥ [१०]

॥ द्विहिङ्कारंवामदेव्यम्॥ प्रसोमा२३देववीतयायि।
सायिन्धुर्न्नपिप्ये अर्णसाꣳओः पयसामदिरोऽनजौहो ३।
ऊम्मा२। गृ२३वीः। अच्छाकोशाम्मधौहो३। ऊम्मा

* ऊ० गा० १८प्र० १च० १४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२। श्रुताम्। औ२३होवा ॥(१) अच्छाको ३२३श्र
म्मधुश्रुताम्। आच्छाकोशम्मधुश्रुतमाहर्यतोअर्जुनो
आत्कऔहो३। ऊम्मा२। व्या२३ता। प्रियस्सूनुर्न्नमौ
हो३। ऊम्मा२। जिया। औ३होवा॥(२) प्रियःसूर
३नुर्न्नमर्जियाः। प्रायःसूनुर्न्नमर्जियस्तमीं हिन्वन्त्यपसो
ऽयथौहो३। ऊम्मा२। रा२३थाम्। नदीषुवाऽगभौ
हो३। ऊम्मा२। स्तियोः। औ२३होवा। हो५
ई। डा(३)॥ १७ ॥ [११]

॥ कण्वरथतरं॥ प्रासोमदेववीतयायि। सिन्धुर्न्न
पायि। ष्ये३आर्णा३सा। अंशोःपयसामदिरोनजागृ
वा२३४ऐहि। अच्छाको२३४शाम्। मधा३१उवा२३।
ए३। श्रुतमा॥(१) आच्छाकोशम्मधुश्रुताम्। अच्छा

० कं० गा० १९प्र० २अ० १७खं०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २ १ २ र र र र
कोग्राम्। मा३धुसू३ताम्। आद्दर्य्यतोअर्जुनोअत्के

३ ५र १ १ २ २ र र
अव्यंता२३४ऐही। आ३द्दार्य्या३तो। अर्जुनोअत्केअ

३ ५र २ १ ५ २ २
व्यंता२३४ऐही। पियःस्२३४नूः। ममा३१उवा२३। ए३।

२ ३ २ २र १र २ १ २ १ २ १र २
जियआ ॥(२) प्रायःसूनुर्न्नभर्जियाः। प्रियःसूनूः। ना

१ २ २ र र ५र २
३माज्र्जा३याः। तमीं्ँहिन्वन्त्यपसोयथा२३४मैही। ना

१ २ २ र र २ ५र २१र
३मायिं्ँहा३यिन्वा। तियपसोयथारथा२३४मैही। नदी

५ २ २ ३ ३र २
षू२३४वा। गभा३१उवा२३। ए३। स्तियोवा ॥६*॥[१२]२०

अथ तृतीयतृचे, † प्रथमा।

१ २र ३ २ ३ १ २ ३ १ २
प्रसोमासोमदच्युतःश्रवसेनोमघोनाम्।

१ २ ३ १ २
सुताविदथेअक्रमुः ॥ १ ‡ ॥

---

* ऊ० गा० २२प्र० २ख० ६सा०।

† 'उक्तोमाध्यन्दिनः पवमानः, उक्तान्नि गायत्राणि ०००। आर्भवः पवमानो वक्तव्यः तस्य ज्योतिष्टोमवत् छन्दांसि साम्नाम्नायनामधेयैरिवोच्यते'—इति वि०।

‡ ऋ० आ० ५,२,१ (१भा० ३०पृ०)=ऋ० वे० ९, ८, ११, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सोमासः" सोमाः "मदच्युतः" मदस्राविणः "सुताः" अभिषुताः सन्तः "विदथे" यज्ञे "मघोनां" हविष्मतां "नः" अस्माकं "श्रवसे" अन्नाय कीर्त्तये वा "प्र अक्रमुः" प्र गच्छन्ति ॥

"मघोनां"-"मघोनः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २र ३ १ २ ३ २

आदीᳬं हᳬंसोयथागणंविश्वस्यावीवशन्मतिम् ।

२ ३ १ २र

अत्योनगोभिरज्यते ॥ २ * ॥

"आत्" अपिच "ईम्" अयं सोमः "हंसो† यथा" "गणं" जनसङ्घं स्वगतिविशेषेण स्वनेन वा प्रविशति, तद्वत् "विश्वस्य" सर्वस्य स्तोतृजनस्य "मतिं" स्तुतिं बुद्धिं वा "अवीवशत्" वशं नयति; स च सोमः "अत्यो न" अश्व इव "गोभिः" गव्यैरदकै र्वा "अज्यते" सिच्यते स्निग्धीक्रियते ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २

आदीन्त्रितस्यपोषणोहरिᳬंहिन्वन्त्यद्रिभिः ।

३ २ १ २ ३ १ २

इन्दुमिन्द्रायपीतये ॥ ३ ‡ ॥ २१

* ऋ० वे० ९, ८, २२, २ ।

† 'हंसः—आदित्यः'—इति वि० ।

‡ ऋ० वे० ९, ८, २२, ३ । अत्रैव च पुनः ५, २, ४, २ । परं तत्र तु "इतन्त्रितस्य"—इति पाठः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"आत्" अपिच "ईम्" एनं "हरिं" हरितवर्णम् "इन्दुम्" सोमं "त्रितस्य" ऋषेः "योषणः"* अङ्गुलयः "अद्रिभिः" ग्रावभिः "हिन्वन्ति"। किमर्थम्? इन्द्राय इन्द्रस्य "पीतये" पानार्थम्॥ ३॥ २१

१ र २र र १ २
॥ सꣳहितम्॥ प्रसोमासोम। दा २च्युताः। अ

१ २ १ २
वा २। सा २ ३ यिनो। मा २घोनाम्। सू २ ३ ताः।

१ ७र २
वा २यिदा। थे आ २ ३। हाउवा ३। क्रा २ ३ ४

५
मूः (१)॥ १४†॥ [१]

१ र २र १र २ २
॥ आभ्रुभार्गवम्॥ प्रसोमासोम। दच्यूइताः।

१ र २ १ ३ ५ १ २
आवसिनो३। मां२घो२३४नाम्। सुतावा१यि। दा२।

३र २ १ ५ ५
थे आ३। क्रा२३४मो६हायि(१)॥ २०‡॥ [२] २१

---

* 'योषणः—युमिश्रणे, मिश्रणकर्त्तारः ऋत्विजः,—इति वि०।

† ऊ० गा० १प्र० १ख० १४सा०।

‡ ऊ० गा० ११प्र० १ख० २०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथैकर्च्चे चतुर्थसूक्ते*—प्रथमा।

३ १ २ ३१र २र १ २ ३. १ २
अयापवस्वदेवयूरेभन्पर्य्येषिविश्वतः।

२ ३ १ २
मधोर्धाराअसृक्षत ॥ १ ॥ †

हे सोम! "देवयुः" देवान् कामयमानः त्वम् "अया" अनया धारया "पवस्व" चर। ततः "रेभन्" शब्दायमानः "पवित्रं" "विश्वतः" "पर्य्येषि" परिगच्छसि। अनन्तरं "मधोः" मदकरस्य तव "धाराः" आत्मीयाः "असृक्षत" सृज्यन्ते॥

अत्र द्वितीय-तृतीय-पादौ व्यत्ययेन ‡ पाठौ ॥ १ ॥

अथैकर्च्चे पञ्चमे—प्रथमा ¶।

१ २ ३ १उ ३ २ ३ १ २ ३ १ २
पवतेहर्यतोहरिरतिह्वराꣳसिरꣳह्या।

२क २र ३ १ २ ३ २ ३ १ २
अभ्यर्षंस्तोतृभ्योवीरवद्यशः ॥ २ ॥ §

* मूले, गानग्रन्थे, पदकारनये, विवरणमते चेदमपि सूक्तं तृचं; तथाचेदमेव सूक्तमस्य प्रपाठकस्यान्त्यमिति।

† ऋ० वे० ७, ५, ११, ४।

‡ तथाच—"अयापवस्वदेवयुर्मधोर्धाराअसृक्षत। रेभन्पर्य्येषिविश्वतः"—इति ऋ० पाठः।

¶ मूलादिमते त्वियमृक् द्वाविंशति-सूक्तस्य द्वितीयेति।

§ छ० आ० ६, २, ३, ११ (२ भा० २२० पृ०) = ऋ० वे० ७, ५, ११, ३।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हर्य्यतः" स्पृहणीयः "हरिः" हरितवर्णः सोमः "रंह्या" तृतीयाया आकारः साधुवेगेन "ह्वरांसि" कुटिलानि अनृजूनि पवित्राणि "अति पवते" अतीत्य गच्छति। किं कुर्व्वन्? स्तोतृभ्यः "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्षन्" अभिगमयन् पवते ॥ २॥

अथैकर्च्चे षष्ठे प्रथमा *।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र
प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

३ १ २ ३ १ ९ ३ २ ३ १र २र
अपश्वानमराधसꣳहतामखन्नभृगवः ॥ ३ † ॥ २२

॥ इति प्रथमः प्रपाठकः ॥

"सुन्वानाय" [षष्ठ्यर्थे चतुर्थी (२,३,६२वा०)] सुन्वानस्य अभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्मविघ्नकारी "न प्र वष्ट" न भजतां न शृणोत्विति यावत्। तथा हे स्तोतारः! "अराधसं" साधककर्म-रहितं "श्वानम्" "अपहत"। तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखम् एतन्नामानं "भृगवः" अपहतवन्तः तथा अपहतेत्यर्थः ॥

"प्रसुन्वानाय"-"सुन्वानस्य", "वष्ट"-"ह्वत"—इति पाठौ ॥१॥२२

* मूलादिनये लियस्तक् द्वाविंशति-सूक्तस्य तृतीयेति।

† ऋ० षा० ६, ९, १, ९ (२भा० १६८ पृ०) = ऋ० वे० ७, ५, ९, ३ = षचौ-सोत्तरायां पुनः ९, २, ३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १र २ ३ ४ र ४
॥ आक्षारम् ॥ पव । तेहा३४ । औहोऽ५र्य्यतोहरा

१ र २१ २ ३१ र
यिः । अतिक्रारा॒सिर॒ । हा२३या३४ । अर्षा । स्तो

१र २ ४ ५ ३ १ १ १ १
तृभ्योवायि । रा३वद्य । श्वा२३४५ः(३) ॥ १६ * ॥ [१]

५ ३र २ ४ ५ १
॥ गौरोवितम् ॥ प्रसु । न्वाना ३ । यअन्धसाः । म

र १ र २ ४
र्त्तोनवष्टतद्वचा२३ः । आपश्वाना३१२३म् । अरा५धसा

१ र २ ४ ५ ४ ५
म् । हातामखा३१२३म् । नभोवा । गा५वोऽ६हायि ॥

(३)॥ १७ † ॥ [२]

२ र र १ २ १
॥ सुज्ञानम् ॥ पवतेद्दा । र्य्यतोहरायिः । अजिक्रा

१ २ १ र
रा२ । सिर॒ह्वियाः । अभियार्षा२ । स्तोतृ । भ्यो

३ ५र र १ २ १ १ १ १ १
र्वा२३४औहोवा । रवद्यश्वय३उपा२३४५(२) ॥१५ ‡॥[३]

२ र १ र २
॥ काशीजम् ॥ पवतेद्दा । र्य्यतोहा२३रा३४यिः ।

---

* ऊ० गा० १६प्र० २अ० १६सा० ।

† ऊ० गा० १प्र० २ख० १७सा० ।

‡ ऊ० गा० ६प्र० २ख० १५सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १ १ र र
अजिक्षरा। सिर(ु)हार२३या३४। अभियर्षा। स्तोतृभ्यो

र १ ३ ५र र ३
वीरवत्। यार। शा२३४। औहोवा। ऊ२३४

५
पा(२) ॥ १६ * ॥ [४]

२ १ २ ४ ५ १ २ ५
॥ पौष्कलम् ॥ पवते३हर्य्य। तोहा २३४रायिः।

२ १ २ १ २ ३ ५ २ १ ७र
अतिक्षरा। सायिर(ु)हार२३४या। अभाअर्षा। स्तोतृ

३ २ १ ३ १ १ १ १
रभ्योर३४५वाई५६यि। रवद्यशा२३४५: ॥ २ † ॥ [५]२२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

षष्ठः खण्डः‡ ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरोदेयाद् विद्यातीर्थ-महेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे उत्तराग्रन्थे द्वितीयोऽध्यायः¶ ॥

---

* ऊ० गा० ६प्र० २ख० १६सा०।

† ऊ० गा० ६प्र० २ख० २सा०।

‡ 'विंशत्तौमिकं प्रथममहः समाप्तम्'—इति वि०।

¶ 'समाप्तश्च प्रथमः प्रपाठकः'—इति वि० मूलादिसर्वसम्मतश्चैतदिति शम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

## ॥ अथ तृतीयोऽध्यायः आरभ्यते * ॥

तत्र,

पवस्ववाचइति पञ्चतृचात्मके प्रथमखण्डे—

प्रथमतृचे—प्रथमा ।

१ २   ३   १   २   ३ १र   २र ३   १     २ ३ १   २
पवस्ववाचोऽग्रियःसोमचित्राभिरूतिभिः ।

३ १     १र   ३   १   २
अभिविश्वानिकाव्या ॥ १ ॥ †

हे "सोम !" "अग्रियः" मुख्यः‡ त्वं "चित्राभिः" पूजनीयैः¶ "ऊतिभिः" रक्षणीयैः सह "वाचः" अस्मदीयाः स्तुतीः

---

* 'इदानीं द्वितीयमहरारभ्यते द्वितीयश्च प्रपाठकः । पञ्चदशसौमिकं द्वितीयमहः'—इति वि० ।

† ऋ० वे० ७, १, २८, ५ ।

‡ 'अग्रियः प्रधानभूताः'—इति वि० । अग्रिय शब्दन्त्वेवं व्याचख्यौ भगवान् यास्कः—"अग्रगमनेनेति वाग्रगरणेनेति वाग्रसम्पादिन इति वा । अपिवाग्रमित्येतदनर्थकमुपबन्धमाददीत"—इति ६, १५ ।

¶ 'चित्राभिः विचित्राभिः नानाप्रकारैः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रति "पवस्व"। [उत्तरार्द्धं उक्तमेवार्थं विशदयति— ] "विश्वानि" सर्वाणि "काव्या" काव्यानि स्तुत्यात्मकानि वाक्यानि "अभि" पवस्वेति ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २
त्वꣳसमुद्रिया अपोग्रियोवाचईरयन्।
१ २
पवस्वविश्वचर्षणे ॥ २ ॥ *

हे "विश्वचर्षणे" सर्वस्य द्रष्टः सोम! "अग्रियः" मुख्यः त्वं "वाचः" † "ईरयन्" प्रेरयन् "समुद्रियाः" आन्तरिक्षाणि‡ "अपः" उदकानि¶ "पवस्व" धारया क्षर ॥

"विश्वचर्षणे"-"विश्वमेजय"—इति छन्दोग-बह्वृचानां पाठौ ॥ २ ॥

अथ तृतीया।

२ ३ १र २र ३ १ २
तुभ्येमाभुवनाकवेमहिम्नेसोमतस्थिरे।
१ २ ३ १ २
तुभ्यमर्षन्तिसिन्धवः ॥ ३ § ॥ १

---

* ऋ० वे० ७, १, २९, १।

† 'अग्रियो वाचः—प्रधानभूताः ऋग्यजुःसामलक्षणाः'—इति वि०।

‡ "समुद्रः"—इत्यन्तरिक्षनामसु निघण्टौ पञ्चदशं पदम् (१, ३)।

¶ 'समुद्रिया अपः—समुद्रे भवाः आपः समुद्रियाः। द्रोणकलशः समुद्रः'—इति वि०।

§ ऋ० वे० ७, १, २९, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "कवे" क्रान्तकर्म्मन् सोम ! "तुभ्यं" तव "महिम्ने" "इमा" इमानि "भुवना" भुवनानि "तस्थिरे" तिष्ठन्ति त्वामेव पुरस्कुर्वन्तीत्यर्थः। किञ्च "धेनवः" नवप्रसूतिकाः देवानां हविःप्रदानेन प्रीणयित्र्यो गावः * "तुभ्यं" त्वदर्थमेव 'आशिरं प्रयस्व मे'—इति "धावन्ति" आगच्छन्ति ॥

"धावन्तिधेनवः"—इति छन्दोगाः, "अर्षन्तिधेनवः"—इति बह्वृचाः ॥ २ ॥ १

अथ द्वितीयतृचे—प्रथमा ।

१ २　　२ १ २　३ २ ३ १　२　३ २　३ १ २
पवस्वेन्दोवृषासुतःकृधीनोयशसोजने ।

२　३　२ ३ १ २
विश्वाअपद्विषोजहि ॥ १ ॥ †

हे "इन्दो" सोम ! "सुतः अभिषुतः "वृषा" कामानां वर्षिता "पवस्व" धारया चर "जने" जनपदे "नः" अस्मान् "यशसः" यशस्विनः "कृधि" कुरु ; "विश्वा" विश्वान् सर्वान् "द्विषः" द्वेष्टॄन् शत्रून् "अपजहि" मारय च ॥ १ ॥

---

* 'धेनवः—गावः। अथवा धेनव आदित्यरश्मयः'—इति वि०।

† छ० आ० ५, २, ५, ३ ( २भा० ३२ ४० ) = ऋ० वे० ७, १, २३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
यस्यतेसख्येवयꣳसासह्यामपृतन्यतः।

१ २ ३ १ २ ३ २
तवेन्दोद्युम्नउत्तमे ॥ २ ॥ *

हे "इन्दो" सोम ! "अस्य" † अस्मिन् यागे वर्त्तमानस्य "ते" तव "सख्ये" सखित्वे सति वयं स्तोतारः "तव" त्वदीये "उत्तमे" श्रेष्ठे "द्युम्ने" अन्ने तृप्तिं प्राप्ताः [तथाच यास्कः—"द्युम्नं द्योततेर्यशो वान्नं वा (निरु० नै० ५, ५)"—इति] "पृतन्यतः" युद्धमितः शत्रून् ‡ "सासह्याम" अभिभवेम ¶ ॥

द्वितीय-तृतीयपादौ व्यत्ययेन पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र ३ २ ३ २ ३ १ २
यातेभीमान्यायुधातिग्मानिसन्तिधूर्वणे ।

१ २ ३ २
रक्षासमस्यनोनिदः ॥ ३ § ॥ २

---

* ऋ० वे० ७, १, २३, ४।

† मूलपाठस्तु "यस्य"—इति; विवरणकृतापि तथैव खीकृतम्, पदग्रन्थ-गान-ग्रन्थादावपि तथैव श्रूयते ।

‡ 'पृतन्यतः—पृतनाः सेनाः, ताभिर्ये यान्त्यग्रे ते स्थिताः वीरपुरुषाः'—इति वि०। "पृतनाः"—इति सङ्ग्रामनामसु निघण्टौ अष्टादशं पदम् (२, १७।

¶ 'सासह्याम—सहेम'—इति वि० ।

§ ऋ० वे० ७, १, २३, ५, ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "सोम!" "ते" तव "या" यानि "भीमानि" शत्रूणां भयङ्कराणि "तिग्मानि" तीक्ष्णानि "आयुधा" आयुधानि * "धुर्वणे" शत्रुवधार्थं सन्ति तैः "आयुधैः" "समस्य" सर्वस्य शत्रोः "निदः" निन्दायां† "नः" अस्मान् "रक्ष" पालय ॥३॥ २

अथ तृतीयतृचे—प्रथमा।

१ २　३ १　२ ३ १ २　३ १ २
वृषासोमद्युमाꣳअसिवृषादेववृषव्रतः।
२ ३ १ २
वृषाधर्म्माणिदध्रिषे ॥ १ ॥ ‡

हे "सोम!" "वृषा" कामानां वर्षिता त्वं "द्युमान्" दीप्तिमान् "असि"। अपिच हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः" वर्षणशीलकर्मासि। किञ्च हे सोम! "वृषा" त्वं "धर्माणि" देवानां मनुष्याणाञ्च हितानि कर्माणि "दध्रिषे" धारयसि॥

"दध्रिषे"-"दधिषे"—इति पाठौ॥ १॥

---

* 'शत्रुच्छिप्रासतोमरादीनि'—इति वि०।

† 'निदः--नितरां दृणाति निदः, तस्य सम्बोधनं निद?—इति वि०।

‡ ऋ० आ० ऋ० ६, १, २, ८ (२भा० ९३ पृ०) = ऋ० वे० ७, १, ३९, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ २

वृष्णस्तेवृष्ण्यꣳशवोवृषावनंवृषासुतः ।

१र २र ३ १र २र

सत्वंवृषन्वृषेदसि ॥ २ ॥*

हे "वृषन्" कामानां वर्षक सोम ! "वृष्णः" वर्षितुः † "ते" तव "शवः" बलं ‡ "वृष्ण्यं" वर्षणशीलं भवति "वनं" तव भजनमपि, "वृषा" वर्षणशीलं "सुतः" अभिषुतः तव रसोऽपि "वृषा" वर्षणशीलः "स त्वं" "वृषेदसि" वर्षणशील एवासि भवसि ॥

"सुतोमदः"—इति, "सत्वंसत्यम्"—इति च पाठौ ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ २ ३ १र २र ३ १र २र

अश्वोनचक्रदोवृषासङ्गाइन्दोसमर्वतः ।

१ २ ३ १र २र

विनोरायेदुरोवृधि ॥ ३ ¶ ॥ ३

हे "इन्दो" सोम ! "वृषा" त्वं "अश्वोन" अश्वइव "सञ्चक्रदः" सङ्क्रन्दसे । अपिच "गाः" पशून् "अर्वतः" अश्वांश्च अस्मभ्यं

* ऋ० वे० ७, १, २९, २ ।

† 'वृष्णः—वृषु सेचने ( भ्वा० पर० ) सेचन-समर्थस्य ते'—इति वि० ।

‡ "शवः"—इति बलनामसु निघण्टौ तृतीयं पदम् ( २, ९ ) ।

¶ ऋ० वे० ७, १, २९, ३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सम्प्रयच्छसीति शेषः। किञ्च "नः" अस्माकं * "राये" धनाय "दुरः" द्वाराणि "विवृधि" विवृतानि कुरु ॥ ३ ॥ ३

अथ चतुर्थतृचे—प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २
वृषाह्यसिभानुनाद्युमन्तन्त्वाहवामहे ।

१ २ ३ १ २
पवमानस्वर्दृशम् ॥ १ ॥ †

हे सोम! त्वं "वृषासि हि" अभिमत-फलानां वर्षिता भवसि खलु। तस्मात् हे "पवमान" पूयमान वा सोम! "स्वर्दृशं" सर्वस्य [ सूर्यस्य वा ] द्रष्टारं [ सर्वैं देवैर्द्रष्टव्यं वा ] "भानुना" तेजसा "द्युमन्तं" दीप्तिमन्तम् अतिशयेन तेजस्विन-मित्यर्थः [ स्तुतिमन्तं वा ], "त्वा" त्वां वयं "हवामहे" यज्ञेषु आह्वयामहे ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ २ १ २ ३ १ २ ३ १ २
यदद्भिःपरिषिच्यसेमर्मृज्यमानआयुभिः।

१ २ ३ २ ३ १ २
द्रोणेसधस्थमश्नुषे ॥ २ ॥ ‡

---

* 'नः-अस्मभ्यम्'—इति वि०।

† छ० आ० ५, २, ५, ४ ( २भा० ३३पृ० ) = ऋ० वे० ७, २, १, ४।

‡ ऋ० वे० ७, २, २, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम! त्वम् "आयुभिः" मनुष्यैः * ऋत्विग्भिः "मृज्यमानः" अतिशयेन शोध्यमानः सन् "अद्भिः" वसतीवर्याख्याभिः "यद्" यदा "परि सिच्यसे" परितः सिच्यमानो भवसि, तदानीं "द्रोणे" द्रोणकलशेन गृह्यमाणः सन् "सधस्थं" सह तिष्ठन्त्यत्रेति सधस्थं स्थानं ग्रहचमसादिकम् "अश्नुषे" व्याप्नोषि॥

"मृज्यमानआयुभिः"-"मृज्यमानोगभस्त्योः"—इति, "द्रोणे"-"द्रुणा"—इति च पाठौ॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २
आपवस्वसुवीर्य्यम्मन्दमानःस्वायुध।

३ १ २ ३ १ २
इहोष्विन्दवागहि॥ ३ †॥ ४

हे "स्वायुध"! यत्र 'स्फ्य-कपालादीनि दशायुधानि-इत्यभिधीयन्ते, शोभनानि तानि यस्य स तथोक्तः। यद्वा धनुरादीन्यायुधानि यस्य सः, तादृश हे सोम! त्वं "मन्दमानः" मोदमानः सन् [अन्तर्णीतण्यर्थः] देवान् स्वयं मादयन् ‡ "सुवीर्य" शोभनवीर्योपेतं पुत्रादिकमस्माकम् "आ पवस्व" पवतिर्गत्यर्थः, आ प्रापय। किञ्च हे इन्दो! ग्रहेषु चमसेषु रक्षणशील सोम!

* "आयवः"—इति निघण्टौ मनुष्यनामसु सप्तदशं पदम् (२ ३)।

† ऋ० वे० ७, १, १, ५।

‡ 'मन्दमानः—शोध्यमानः तप्यमानोवा'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"इह उ" इहैव* अस्मदीये यज्ञे "सु आगहि" सुष्ठु † आगच्छ ॥ ३ ॥ ४

अथ पञ्चमतृचे—प्रथमा ।

१ २     ३ २ ३ १ २    ३ २
पवमानस्यतेवयम्पवित्रमभ्युन्दतः ।
३   १   २र
सखित्वमावृणीमहे ॥ १ ॥ ‡

हे सोम ! "पवित्रम् अभ्युन्दतः" पवित्रमभिद्रयतः ¶ "पवमानस्य" चरतस्य "ते" तव "सखित्वं" सख्यं वयम् अस्मदीयव: आङ्गिरसाः स्तोतारः "आ वृणीमहे" प्रार्थयामहे ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १   २   ३ १ २ ३ १   २
येतेपवित्रमूर्मयोभिक्षरन्तिधारया ।
१ २
तेभिर्नःसोमम्मृडय ॥ २ ॥ §

हे सोम ! "ते" तव "ये" ऊर्म्मयः तरङ्गाः ‖ "पवित्र"

---

*,† 'उ, सु—इति द्वावपि पदपूरणौ,—इति वि० ।

‡ ऋ० वे० ७, १, १८, ४ ।

¶ 'अभ्युन्दतः—आर्द्रं कुर्वन्—इति वि० ।

§ ऋ० वे० ७, १, १८, ५ ।

‖ 'ऊर्म्मयः—त्वदीयाः, सोमसङ्घाताः—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"धारया" "अभि चरन्ति" तेभिः तैः ऊर्मिभिः "नः" अस्मान् "मृड़य" सुखय ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र ९ २ ३ १ २ ३ १ २
सनःपुनानआभररयिंवीरवतीमिषम् ।

१ २ ३ १ २
ईशानःसोमविश्वतः ॥ ३ * ॥ ५

हे सोम ! "विश्वतः" सर्वस्य जगतः "ईशानः" ईश्वरः "सः" अभिषुतः "पुनानः" पूयमानः त्वं "नः" अस्मभ्यं "रयिं" धनं "वीरवतीं" पुत्राद्युपेतम् "इषम्" † तम् "आभर" आहर ॥ ३ ॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

——000——

* ऋ० वे० ७, १, १९, १ ।

† 'इषं—इष्टिमन्नं वा—इति वि० ।

‡ 'उन्नं वर्द्धिष्यमानम्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीयखण्डे *—

प्रथमतृचे—प्रथमा।

३ २ ३ १ ३ १ २ ३ १ २
अग्निन्दुतंवृणीमहेहोतारंविश्ववेदसम्।
३ २३१२ ३१२
अस्ययज्ञस्यसुक्रतुम्॥ १॥ †

[ अग्नेर्दूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते—'अग्निर्देवानां दूत आसीदुशनाकाव्योऽसुराणाम्'—इति ] तादृशं देवं "दूतम्" अग्निम् अस्मिन् कर्मणि वृणीमहे भजामः। कीदृशं "होतारं" देवानामाह्वातारं "विश्ववेदसं" सर्वधनोपेतं [ बहुव्रीहौ विश्वं सञ्ज्ञायाम् (६, २, १०६)"—इति पूर्वपदान्तोदात्तत्वम् ] "अस्य" प्रवर्त्तमानस्य यज्ञस्य निदानत्वेन "सुक्रतु" शोभन-कर्माणं शोभन-प्रज्ञं वा॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३ १ २
अग्निमग्निंहवीमभिःसदाहवन्तविश्पतिम्।
३ १ २ ३ २
हव्यवाहम्पुरुप्रियम्॥ २॥ ‡

* 'इदानीमाज्यानि'—इति वि०।

† छ० आ० १, १, १, २ (१भा० ९७पृ०) = ऋ० वे० १, १, १२, १।

‡ ऋ० वे० १, १, १२, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



[ यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोगभेदादाहवनीयादिस्थानभेदाद्वा बहुविधत्वमभिप्रेत्य ] "अग्निम्-अग्निम्"—इति वीप्सा तं "हवीमभिः" आह्वानकरणैर्मन्त्रैः "सदा हवन्त" निरन्तरमनुष्ठातार आह्वयन्ति *। कीदृशम्? "विश्पतिं" विशां प्रजानां होत्रादीनां पालकं "हव्यवाहं" यजमान-समर्पितस्य हविषः देवान् प्रति वोढारम् अतएव "पुरुप्रियं" बह्वनां देवानां प्रीत्यास्पदम्॥ [अग्निमग्निम्—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः; "तस्य परमाम्रेडितम् (८, १,२)"—इत्युत्तरस्य आम्रेडित-सञ्ज्ञायाम् "अनुदात्तञ्च (८, १, ३)"—इत्यनुदात्तत्वम्। हवीमभिः—'ह्वेञ् स्पर्द्धायां शब्दे च (भ्वा०, उभ०); आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापारस्वातन्त्र्यात् कर्त्तृत्वविवक्षया "अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)"—इति कर्त्तरि मनिन्; तस्य छान्दस ईड़ागमः; बहुलं छन्दसि (६, १, ३४)"—इति धातोः सम्प्रसारणम्; परपूर्वत्वं; गुणावादेशौ; नित्त्वादाद्युदात्तत्वं (६, १, १९७)। सदा—"सर्वैकान्येत्यादिना (५, ३, १५)" सर्वशब्दाद्दाप्रत्ययः "सर्वस्य सोऽन्यतरस्याम् (५, ३, ६)"—इति सभावः; व्यत्ययेनाद्युदात्तत्वम् (३, १, ८५)। हवन्त—ह्वेञो लट् झस्य अन्तादेशः (७,१,३); टेरेभावश्छान्दसः (६, ४, ७६) शपि "बहुलं छन्दसि (६, १, ३४)"—इति सम्प्रसारणम्; "तिङ-

* 'हवीमभिः—होतव्यैः सदा हवन्तः आह्वयन्तः; यानि होतव्यानि हवींषि, तैः पुरतोऽवस्थितैः सदाह्वयन्ते इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तिङः ( ८, १, २८ )"—इति निघातः। विश्पतिं—"पत्यावैश्वर्ये ( ६, २, १८ )"—इति पूर्वपदप्रकृतिस्वरे प्राप्ते, "परादिश्छन्दसि ( ६, २, १९९ )"—इत्युत्तरपदाद्युदात्तत्वम्। हव्यवाहम्—'वह प्रापणे ( भ्वा०, उभ० ), "वहश्च ( ३, २, ६४ )"—इति ण्वि प्रत्ययः ; कृदुत्तरप्रकृतिस्वरत्वम् ( ६, २, १३९ )। पुरूणां प्रियं—समासान्तोदात्तत्वम् ( ८, १, २२३ ) ॥ २ ॥

अथ तृतीया।

१२ १२ ३१२ २ २३१२
अग्ने देवाꣳ इहावह जज्ञानो वृक्तबर्हिषे।
२ ३ १ २ ३१२
असि होता न ईड्यः ॥ ३* ॥ ६ †

हे "अग्ने!" "जज्ञानः"‡ अरण्योरुत्पन्नः त्वं "वृक्तबर्हिषे" आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय। तं 'यजमान मनुग्रहीतुम् "इह" कर्मणि हविर्भुजो देवानावह—"नः" अस्मदर्थं "होता" देवानामाह्वाता त्वम् "ईड्योसि' स्तुत्यो भवसि ॥ ३ ॥ ६

द्वितीयतृचेषु—प्रथमा।

१२ ३१ २ २१२ १ २
मित्रं वयꣳ हवामहे वरुणꣳ सोमपीतये।
२ ३ २३१२
या जाता पूतदक्षसा ॥ १ ॥ §

* ऋ० वे० १, १, २२, ३।　　† "आग्नेय माज्यमुक्तम्"—इति वि०।

‡ 'जज्ञानः—जायमानः, अथवा यजमानः'—इति वि०।

¶ 'इदानीं मैत्रावरुणमुच्यते—इति वि०। आज्यमिति शेषः।

§ य० वे० ३३, ४६=ऋ० वे० १, २, ८, ४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वयम्" अनुष्ठातारः "सोमपीतये" * सोमपानार्थं [ "दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ] "मित्र" "वरुण" च उभावाह्वयामः। कीदृशावुभौ? "या जाता" यौ जातौ सन्तौ प्रदेशं प्रादुर्भवन्तौ, "पूतदक्षसा" शुद्धबलौ †। [ पूञ् पवने ( क्र्या०, उभ० ); "निष्ठा ( ३, २, १०२ )"—इति क्तः, श्र्युकः किति ( ७, २, ११ )"—इति इट् प्रतिषेधः। पूतं दक्षौ ययोस्तौ "बहुव्रीहौ प्रकृत्या ( ६, २, १ )"—इति पूर्वपद-प्रकृतिस्वरत्वम् ॥

"याजाता"-"जज्ञाना"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ १ २ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २

ऋतेनयावृतावृधावृतस्यज्योतिषस्पती।

२ ३ १र २र

तामित्रावरुणाहुवे ॥ २ ‡ ॥

"यौ" मित्रावरुणौ "ऋतेन" सत्यवचनेन¶ यजमानानुग्रह-कारिणा "ऋतावृधौ" ऋतमवश्यम्भावितया सत्यं कर्मफलं तस्य वर्द्धकौ "ऋतस्य" सत्यस्य प्रशस्तस्य "ज्योतिषः" प्रकाशस्य "पती" पालकौ § [ श्रुत्यन्तरे मित्रावरुणयोरदिति-पुत्रत्वेन श्रुतत्वात्

* "मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः"—इति पा० ३। ३। ९६।

† "पूतदक्षौ—पूतत्वेन दक्षत्वेन च सम्पन्नौ"—इति वि०।

‡ ऋ० वे० १, २, ८, ५।

¶ 'ऋतेन—यज्ञेन—इति वि०।

§ 'ज्योतिषः नक्षत्रजातस्य ज्योतिष्टोमस्य वा पती'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिषः पालकत्वं युक्तम्, श्रुत्यन्तरे च अष्टौ पुत्रासो अदितेरित्युपक्रम्य मित्रश्च वरुणश्चेत्यादिकमाम्नातम् तौ मित्रावरुणौ। तथाविधैर्मित्रावरुणैः "सुपां सुलुगिति (७, १, ३९) पूर्वसवर्णदीर्घ आकारः] "हुवे" आह्वयामि। [ह्वेञ आत्मनेपदोत्तमपुरुषैकवचने सम्प्रसारणे (६, १, ३४) पूर्वरूपत्वे च (६, १, १०८) "बहुलं छन्दसि (२, ४, ७३)"—इति शपोलुक्; टेरेत्त्वम् (३, ४, ३९); "गुणे प्राप्ते "क्ङिति च (१,१,५)"—इति प्रतिषेधः; उवङादेशः (६, ४, ७७); "तिङतिङः (८, १, २८)"—इति निघातः॥ २॥

अथ तृतीया।

१ २   ३ १ २   ३ १२   ३२   ३ १ २<br>
वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः।

१ २   ३ १ २<br>
करतान्नःसुराधसः॥ ३ *॥ ७

अयं "वरुणः" देवः अस्माकं "प्राविता भुवत्" प्रकर्षेण रक्षको भवतु। "मित्रः" च "विश्वाभिः ऊतिभिः" सर्वाभिः प्राविता भुवत्। तावुभावपि "नः" अस्मान् "सुराधसः" प्रभूतधनयुक्तान् "करतां" कुरुताम्। [डुकृञ् करणे (उभ०) भौवादिकः, लोटस्तस्, तसस्ताम्, अकर्त्तरि शप्, गुणोरपरत्वम्,

* ऋ० वे० १, २, ८, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गप: पित्त्वादनुदात्तत्वम् ( ३, १, ४ ); तिङश्च लसार्वधातुकस्वरेण ( ६, १, १८६ ) धातुस्वरं ( ६,१, १६२ ) शिष्यते ॥३॥ ७

इन्द्रमिद्गाथिनइति चतुर्ऋचं तृतीयं सूक्तम् *,

तत्र प्रथमा।

२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
इन्द्रमिद्गाथिनोबृहदिन्द्रमर्केभिरर्किणः।
२ ३ १ २
इन्द्रंवाणीरनूषत ॥ १ † ॥

"गाथिन:" गीयमान-सामयुक्ता उद्गातार: "इन्द्रमित्" इन्द्रमेव "बृहत्" "त्वामिद्धिहवामहे ( छ०आ० ३, १, ५, २ )" —इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन ( आ० गा० १, १, २७) साम्ना "अनूषत" स्तुतवन्त:। [णु स्तुतौ ( तु०, प० ); "णो न: ( ६, १, ६५ )"—इति नत्वम्; लुङि व्यत्ययेनात्मनेपदम् ( ३, १, ८५ ); झस्य अदादेश: ( ७, १, ५ ); सिच इड़भाव: उकारस्य दीर्घत्वं छान्दसम् ( ६, १, १३३ ); धातो: कुटादित्वात् सिचो ङित्त्वेन ( १, २, १) गुणाभाव: ( १, १, ५ ) ] "अर्किण:" अर्चन-हेतु-मन्त्रोपेता होतार: "अर्केभि:" उक्थरूपैर्मन्त्रैरनूषत। ये त्ववशिष्टा अध्वर्यव: ते "वाणी:" वाग्भि:" यजूरूपाभि: इन्द्रम् अनूषत [ अर्कस्य मन्त्रपरत्वं यास्केनोक्तम् ( ५, ४ ) 'अर्कोमन्त्रोयदनेनार्चन्तीति' ] ॥ १ ॥

---

* 'ऐन्द्रमाद्यमिदं'—इति वि०।

† छ० आ० ३, १, १, ५ ( १भा० ४२० पृ० ) = ऋ० वे० १,१, १२, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३२उ ३ २ ३ १ २ ३१ २३१ २
इन्द्र इद्धर्य्योस्सचासम्मिश्ल आवचोयुजा।

१ २३१ १ ३ १ २
इन्द्रोवज्रीहिरण्ययः॥ २ * ॥

"इन्द्र इत्" इन्द्र एव "हर्य्योः" हरिनामकयोरश्वयोः "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यक् मिश्रयिता। कीदृशयोर्हर्य्योः ? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् "इन्द्रः" "वज्री" वज्रयुक्तः "हिरण्ययः" सर्वाभरणभूषित इत्यर्थः॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २
इन्द्रवाजेषु नोवसहस्रप्रधनेषु च।

३१ ३१ २ ३ १ २
उग्रउग्राभिरूतिभिः॥ ३ † ॥

हे "इन्द्र!" "उग्रः" शत्रुभिरप्रधृष्यः त्वम् "उग्राभिः" अप्रधृष्याभिः "ऊतिभिः" अस्मदभिमतपरपाभिः "वाजेषु" युद्धेषु "नः" अस्मान् "अव" रक्ष। तथा "सहस्रप्रधनेषु च" सहस्र-सङ्ख्याक-गजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष॥ ३॥

---

* छ० आ० प० १, २, ३ (२भा० २६७पृ०) = छ० वे० १, १, १३, २।
† छ० आ० प० १, २, ४ (२भा० २६८पृ०) = छ० वे० १, १, १३, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१ २ ३ २ ३१ १ २ ३ १र २र ३ १
इन्द्रोदीर्घायचक्षसआसूर्यᳫँरोहयद्दिवि।

२उ ३ १ २
विगोभिरद्रिमैरयत्॥ ४ *॥ ८ †

अयम् "इन्द्रः" "दीर्घाय" प्रौढाय निरन्तराय "चक्षसे" दर्शनाय "दिवि" द्युलोके "सूर्यमारोहयत्" पुरा वृत्रासुरेण जगति यदापादितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिध्यर्थम् आदित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्यः "गोभिः" स्वकीय-रश्मिभिः "अद्रिम्" मेघम् "व्यैरयन्" विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवानित्यर्थः [ अथवा इन्द्रएव "गोभिः" जलैर्निमित्तभूतैः "अद्रिं" मेघं "व्यैरयन्" विशेषेण प्रेरितवान्। पञ्चदश-सङ्ख्याकेषु रश्मि-नामसु 'खेदयः' (१) 'किरणाः' (२) 'गावः' (३)—इति पठन्ति ( निघ० १, ५ ); त्रिंशत्सङ्ख्याकेषु मेघनामसु 'अद्रिः'(१) 'ग्रावा'(२)—इति पठितम् ( निघ० १, १० )॥ ४॥ ८

---

* ऋ० वे० १ १, १३, ४।

† 'इदानीमिन्द्राग्नमाज्यम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृचात्मके चतुर्थसूक्ते—

प्रथमा।

१ २ ३ १र २र ३१ २ ३ १र २र
इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे।
३ १र २र ३ १ २
धिया धेना अवस्यवः ॥ १ * ॥

"अवस्यवः" रक्षणकामाः वयम् "इन्द्रे" देवे "अग्ना" अग्नौ च "बृहत्" प्रवृद्धं वर्द्धकं † "नमः" हविर्लक्षणमन्नं ‡ "सुवृक्तिं" सुप्रवृत्तां स्तुतिञ्च ¶ "आ ईरयामहे" प्रेरयामः। तथा च "धिया" कर्मणा युक्ता § "धेनाः" ‖ [ वाङ्नामैतत् (निघ० १, ११, ३८)] स्तुतिरूपा वाचश्च अभिप्रेरयामः ॥ १ ॥

अथ द्वितीया।

१र २र३१२ ३ १र २र ३ १ २
ता हि शश्वन्त ईडत इत्था विप्रास ऊतये।
३ २ ३ १ २
सबाधो वाजसातये ॥ २ ** ॥

---

* ऋ० वे० ५, ६, १०, ४।

† 'बृहत्—महत्'—इति वि०।

‡ 'नमः—नमस्कारम्'—इति वि०।

¶ 'सुवृक्तिं—शोभनां वृक्तिं वरणम्'—इति वि०।

§ 'धिया युक्ता'—इति वि०। "धीः"—इति कर्मनामसु निघण्टौ एकविंशतितमं पदम् (२, १)।

‖ 'धेनाः—धेट् पाने (भ्वा० प०), पानसमर्थाः'—इति वि०।

** ऋ० वे० ५, ६, १०.५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ता हि" तौ खलु * इन्द्राग्नी "शश्वन्तः" बहवः "विप्रासः" मेधाविनः जनाः "ऊतये" रक्षणाय "इत्थम्" अनेन प्रकारेण "ईळते" स्तुवन्ति। तथा "सबाधः" समानं परस्परं बाध्यमाना जनाः "वाजसातये" अन्नसातये अन्नलाभाय ताविन्द्राग्नी ईळते। यद्वा 'वाजसातिः'—इति सङ्ग्रामनाम (निघ० २, १७, ३६) सङ्ग्रामार्थम्॥ २॥

अथ तृतीया।

१ २ ३ १ २र २ ३ १ २
तावाङ्गीर्भिर्विपन्यवःप्रयस्वन्तोहवामहे।

३ १ २ ३ १ २
मेधसातासनिष्यवः॥ २ † ॥ ९

"विपन्यवः" स्तोत्रमिच्छन्तः "प्रयस्वन्तः" हविर्लक्षणेनान्नेनोपेताः ‡ "सनिष्यवः" सनिं धनमात्मन इच्छन्तः वयं "मेधसाता" मेधानां यागानां ¶ "साती" सम्भजने निमित्तभूते

* 'चोति यस्मादर्थे'—इति वि०।

† ऋ० वे० ५, ६, १७, ६।

‡ 'प्रयस्वन्तः—प्रकर्षेण यजमानं स्तवाम् प्रति गच्छन्तः'—इति वि०।

¶ "मेधः"—इति निघण्टौ यज्ञनामसु चतुर्थं पदम् (३, १७)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सति हे इन्द्राग्नी ! "ता" तौ "वां" युवां "गीर्भिः" स्तुतिभिः "हवामहे"॥

"विपन्यवः"-"विपन्यवे"—इति पाठौ ॥ ३ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य
द्वितीयः खण्डः * ॥ २ ॥

---

वृषापवस्वेति तृतीयखण्डे †—

प्रथमतृचे—प्रथमा ।

१ २ ३ १२ ३१२ ३२
वृषापवस्वधारयामरुत्वतेचमत्सरः ।
२ ३ १ २ ३१ २
विश्वादधानओजसा ॥ १ ‡ ॥

हे सोम ! त्वं "वृषा" स्तोतृणामभिमत-फलस्य वर्षकः सन् "धारया" त्वदीयया "पवस्व" द्रोणकलशमागच्छ [ पवतिर्गति-कर्मा ( निघ० २, १४, १०८ ) जागतस्त्वं यदा अस्माभिः इन्द्राय दीयसे तदा "मरुत्वते" सहाया मरुतो यस्य सन्ति तस्मै इन्द्राय "मत्सरः" मदकरश्च भव । कीदृशः ? "विश्वा" विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन बलेन

* 'उक्तं प्रातःसवनम्'—इति वि० ।
† 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि० ।
‡ ऋ० आ० ५, २, ४, २ ( १भा० १०४० ) ऋ० वे० ७, २, २, ४ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मुक्तः सन् स्तोतृभ्यः तानि "दधानः" प्रयच्छंस्त्वं भाइयिता भवेति समन्वयः ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ १ २ ३ १ २
तन्त्वाधर्त्तारमोण्योऽ३ऽष्पवमानस्वर्दृशम्।

३ १२ २२ ३ १ २
हिन्वेवाजेषुवाजिनम् ॥ २ * ॥

हे "पवमान" पूयमान पुनान वा सोम! "ओण्योः" [ द्यावापृथिवी नामैतत् (निघ० ४, ३०, १५) ] तयोः "धर्त्तारं" धारकम् अतएव "स्वर्दृशं" सर्वस्य सूर्य्यंव द्रष्टारं, सर्वै र्द्रष्टव्यं वा। "वाजिनं" बलवन्तं तं पूर्वोक्तगुणं प्रसिद्धञ्च "त्वा" त्वां "वाजेषु" सङ्ग्रामेषु त्वां प्रेरयामि [ यद्वा "वाजेषु" विषयेषु प्रेरयामि, अन्नादिकं प्रयच्छेत्यर्थः † ॥ २ ॥

अथ तृतीया।

३ २ ३ १ ३ १२उ ३ १ २ ३ १ २
अयाचित्तोविपानयाहरिःपवस्वधारया।

२ ३ १ २
युजंवाजेषुचोदय ॥ ३ ‡ ॥ १० ¶

* ऋ० वे० ७, २, ३, १।

† 'वाजेषु—अन्नेषु। सप्तम्येषा, अधिकरणभूतेषु। वाजिनं अन्नवन्तं वेगवन्तं वा'—इति वि०।

‡ ऋ० वे०७, २, ३, २।

¶ 'इह यौक्ताश्वं साम'—इति वि०। 'यौक्ताश्व-प्रभृतीनि सामानि तेषां नाम्नै वार्षप्रतिपत्तिः'—इति च वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "पवमान" सोम ! "अया" * [ अय पय गतौ (भ्वा०, आ०) पचाद्यच् (३, १, १३४), तृतीयाया आकारः (७, १, ३९)] कर्मार्थमितस्ततो गच्छन्तीभिः "विपा" [विप प्रेरणे (चु०, उभ०) हवींष्यग्नौ प्रेरयन्तीति विपा अङ्गुलयः। एकवचनं छान्दसं प्रत्येक-विवक्षया वा] एताभिर्मदीयाभिरङ्गुलिभिः "चितः" स्नातः निर्गतः अभिषुतः "हरिः" हरितवर्णः त्वं "धारया" सन्ततया "पवस्व" द्रोणकलशं ग्रहांश्च गच्छ। किञ्च "युजं" † सखायम् इन्द्रं "वाजेषु" सङ्ग्रामेषु ‡ "चोदय" प्रेरय। यदास्माभिरिन्द्रार्थं सोमा दीयन्ते तदानीमिन्द्रः स्तुत्यानेन हृष्टः सन् शत्रून् हन्तीत्यर्थः ॥ ३ ॥ १०

२र १ २ १२
॥ यौक्ताश्वम् ॥ औहोहोहायि। वृषा। पवस्वा३
१ २ १ २ ५ १ ७
धारायाइ। मारुत्वार३४तायि। ओयि। चमार३।
१ २ ५ २र १ २ १ २ १
चमारत्वार३४राः। औहोहोहायि। विश्वा। दधा२
२ ५ २ २ ५र र २र १ २
नार३४ओ। जासार३४औहोवा ॥(१) औहोहोहायि।
१ २ र १ २ १ २ ५
तन्वा। धर्त्ताराइमोणायोइः। पावा२मा२३४ना।

* 'अया—अनया धिया विश्वस्य पालयित्र्या'—इति वि०।
† 'युजं—योगम्'—इति वि०।
‡ 'वाजेषु—अन्नेषु'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ७ १ ३ ५ २र १ २
ओयि। सुवा२३। सुवा२ह्रृ२३४शाम्। औहोहोहा
१ २ १र ३ ५ २ २
यि। हिन्वायि। वाजा२यिषू२३४वा। जायिना२३४
र ५र २र १ २ १ २ र १
औहोवा॥(२) औहोहोहायि। अया। चित्तोवी३पा
२ १ ३ ५ १ ७
नाया३। हारा२यिः। पा२३४वा। ओ। स्वधा२३।
१ ३ ५ २र १ २ १ २ १र
स्वधा२रा२३४या। औहोहोहायि। युजाम्। वाजा२यि
३ ५ २ २ ५र र २ ३
षू२३४चो। दाया२३४ औहोवा। ओयि। ज्वर
२
आ(३)॥ १८ *॥ [१]

१ २ १ २
॥ सन्तनि॥ वृषाहाउ। पावस्वधा२१उवा२३। रा
५ २१ २र ३ २ २ १ र २
२३४या। मरूत्वतेचमत्सरा१ः। विश्वाहाउ। दाधान
१ ५ १ र १ १र २र १र
ओ२आउवा२३। जा२३४सा॥(१) तन्वाधर्त्तारमोस्योः
२र १ ३ २१ १ १ १ २ १ र २
पवमानस्वर्हृ१शा२३४५म्। हिन्वेहाउ। वाजेषु वा३
५ २ १र २ १र १ १र २र
१उवा२३। जा२३४यिनाम्॥(२) अयाचित्तोविपानया

* ऊ० आ० १प्र० २ख० १८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　२　१र　३११११　　१　२　१र१　१
हरिःपवस्वधारया२३४५। युजाऽहाउ। वाजेषुचोश्र्या

५
उवा२३। दा२३४या(३)॥ १ * ॥[२]

२र　१　२　　१　२　२　　५
॥ ऐडसौपर्णम्॥ वृषापवोवा। स्वाधारा२३४या।

२ १ २ १　　०　१　५　　१
मरुत्वतायि। चमा२त्सा२३४राः। वा२यिश्वा। दा२

२　　१　२र　१　२　४　५　　२　र　१　२
३धा। नाओजसा। औ३होवा॥(१) तन्वाधर्तोवा।

१　२　३　　५　　२ १ २र १　　०　३　　५
रामोणा२३४योः। पवामाना। सुवा२ईं २ ३ ४ शाम्।

२　　१　२र　१　　४　५
हा२यिन्वे। वा२३जायि। षूवाजिनाम्। औ३होवा॥(२)

२ र　　१ २　　१　२　३　　५　　२ १　　२ १
अयाचित्तोवा। वायिपाना२ ३ ४ या। हरायिःपवा।

०　३　५　　१　　२　　१ २र　१
स्वधा२रा२३४या। यू२जाम्। वा२३जायि। षूचोदया।

२　४　५　　४
औ३होवा। हो५ई। डा(३) ॥ २ † ॥[३]

१ २र　१ २ १　　२
॥ रोहितकुलीयोत्तरम्॥ वृषापवस्वधा। रया२।

१　र २ १　　२　　१　　१　　२ २
मरुत्वतेचमत्सा२३राः। वायिश्वा२दाधा२३। नओ२३४

* ऊ० गा० ४प्र० १अ० १सा०।　　† ऊ० गा० ४प्र० १अ० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ५ १ र २१र२१ १
वा। जा५मोऽ६हायि ॥(१) तन्त्वाधर्त्तारम्मो। णियो

१ र २१ २ १ १
र:। पवमानस्तुवर्हू२३शाम्। हायिन्वे२वाजा२३यि।

२१ ५ ४ ५ १ १र२ र २ १
षुवोर२३४वा जा५यिमो६हायि ॥(२) अयाचित्तोविपा।

२ १ २ १र २ १ १
नया२। हरि:पवस्वधारा२३या। यूजा२वाजा२३यि।

२ १ ५ ४ ५
षुचोर२३४वा। हा५योऽ६हायि(३) ॥ ३ * ॥[४]

५ र १ ४ ५र २१२
॥ आमहीयवम् ॥ वृषोपा३वस्वधारया। मरुत्वा१

२ १र२ १ २
जा२यि। यमा२३त्सरा:। विश्वादधा। नओ२३जसा

५ र १ ४र ५र २१
उ। वा३ ॥(१) तन्त्वाधा३र्त्तारमोणियो:। पवामा१

१ २ १र१र १
ना२। सुवा२३हंशाम्। हिन्ववाजायि। षुवा२३

२ ५र २ ४र ५र २१
जिनाउ। वा३ ॥(२) अयाचा३यित्तोविपानया। हरा

२ १ २ १२र १
यि:पा१वा२। स्वधा२३रया। युजंवाजायि। षुचोर

२ २र १ १ १ २
३दयाउ। वा३। स्तौषे२३४५(३) ॥ १ † ॥ [५]

* ऊ० गा० ४प्र० १ख० ३सा०। † ऊ० गा० ६प्र० २ख० १सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र    र    २ र    १
॥ हाविश्मतम् ॥ हाउवृषापवस्वधारयाहाउ । मरु
२    १ २ ३    ५    २    २
त्वता३यि । चामत्सार२३४राः । ऐ२हो१आ २ ३ यिही ।
१ २ १ १र    २    ५र र
विश्वादा३धा । नओ । जा २ सा २ ३ ४ औहोवा ॥(१)
२र र र र र    १ र २    १२
हाउतन्त्वाधर्त्तारमोण्योर्हाउ । पवमाना३ । सूवर्द२३
५    २    २    १    १ २
४शाम् । ऐ२हो१आ२३यिही । हिन्वेवा३जायि । षु
१र    २ ५र र    २र र र र
वा । जा२यिना२३४औहोवा ॥(२) हावयाचित्तोविपान
र    १ ०    १ २ ३    ५
याहाउ । हरिःपवा३ । स्वाधारा२३४या । ऐ२हो१आ
२    १ २ २    १र    ३    ५र र
२३यिही । युजांवा३जायि । षुचो । दा२या२३४औहो
१ ३१११११
वा । हविश्मते२३४५(३) ॥ १ * ॥ [६]

२र र १    १
॥ यौक्ताश्वोत्तरम् ॥ वृषाऔहोहोहायि । पवा ३
१ र    २    १    ३    ५    ३ १    १
स्वाधा१राया३ । मारु२त्वा२३४तायि । चमा३ । ओयि ।
७    २    ५    २र र र १ २    १    ३
चमा२त्सा२३४राः । विश्वाऔहोहोहायि । दधा२ना

* ऊ० गा० ७प्र० १ख० १सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३४ओ । जा२सा२३४औहोवा ॥(१) तन्त्वाऔहोहो
हायि । धर्त्ता३रामो१णायो३ः । पावा२मा२ ३ ४ ना ।
सुवा३ । ओयि । सुवा२ई २ ३ ४ शाम् । ह्विन्वाऔहो
होहायि । वाजा२यिषू२३४वा । जा२यिना२३४औहो
वा ॥(२) अयाऔहोहोहायि । चित्ता३वायिपा१ना
या३ । हारा२यिःपा२३४वा । स्वधा३ । ओ । स्वधा
२रा२३४या । युजाऔहोहोहायि । वाजा२यिषू२३४
चो । दा२ या २ ३ ४ औहोवा । ओयि । जू २ ३ ४
वा(३) ॥ २ * ॥ [७]

॥ आजिगम् ॥ वृषापावा । स्वधाराया । मरुत्व
ते । चामत्सा२३राः । विश्वादाधा । नओजा२३सा३
४३ ॥(१) तन्त्वाधार्त्ता । रमोणायोः । पवमान । स्व

* ऊ० गा० ७प्र० १अ० २सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १र २
हूँ२३ग्राम्। हिन्वेवाजायि। षुवाजार३यिना३४३म्॥(२)
१ २ १ २ १ २ १ १
अयाचायित्तो। विपानाया। हरिःपव। स्वाधा१रा२
२ १ २ १र २ १
३या। युजांवाजायि। षुचोदा२३या३४३। ओ२३४५
ई। डा(३)॥ १४ *॥ [८]
२ र र २ ४ ३ ४र ५
॥ स्वारसौपर्णम्॥ वृषापवस्वधारा३या। मरुत्वतेच
र १ ३ ५ १ २ २ १र
मा। ऊम्। त्सा२३४राः। वायिश्वा३उवा। दधा।
२ १ ५ ४ ५ २ र र र
नओ२३४वा। जा५सोई्हायि॥(१) तन्त्वाधर्त्तारमोणा
२ ३ ४ ५ र र १ २ ५ १
३या३योः। पवमानस्वा। ऊम्। ह२३४ग्रास्। हायि
१ २ र १र २ १ ५ ४ ५
न्वा३उवा। वाजे। षुवो२३४वा। जा५यिनोई्हायि॥(२)
२ र र र २ ३ ४ ३ ४ ५र १ ३
अयाचित्तोविपाना३यौ। हरिःपवस्वधा। ऊम्। रा२
५ १ २ २ र १र २ १ ५ ४
३४या। यूजा ३ उवा। वाजे। षुचो२३४वा। दा५
५
योईहायि(३)॥ १५ †॥ [९]

---

* ऊ० गा० ११प्र० १ख० १४सा०। † ऊ० गा० ११प्र० २ख० १५सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ सुरूपोत्तरम् ॥ वृषापवौहो२ । इया । स्वधारा
या२ । मरुत्वतौहो२ । इया । चमत्सारा२ः । विश्वा
दधौहो२ । इया । नओजा२३सा३४३ ॥(१) तन्त्वा
धत्ताहो२ । इया । रओणायो२ः । पवमानौहो२ ।
इया । सुवर्दृशा२म् । हिन्वेवाजौहो२ । इया । षु
वाजा२३यिना३४३म् ॥(२) अयाचित्तौहो२ । इया ।
विपानाया२ । हरिःपवौहो२ । इया । स्वधाराया२ ।
युजंवाजौहो२ । इया । षुचोदा२३या३४३ । औ२३
४५ई । डा(३) ॥ १८ * ॥ [१०]

॥ ऋषभःपावमानम् ॥ हाहाउवृषापवा । हा३ । हा
३यि । स्वाधारा२रा २ ३ ४ या । मरुत्वतेचमा१त्सा३राः ।
विश्वादा२३४धा । ओमो३ । नओवा । जा५सो६हा

* ऊ० गा० १८प्र० १ख० १८गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यि ॥(१) रामो२णा२३४यौः । पवमानसुवा१र्द३ग्राम् ।
हिन्ववा२३४जायि । ओमो३ । षुवोवा । जा५यिनो६
हायि ॥(२) हाहावयाचित्ताः । हा३ । हार्३यि । वा
यिपार्२ना२३४या । हरिःपवस्वधा१राया । युर्जवा२३४
जायि । ओमो३ । षुचोवा । दा५योऽ६हायि(३)॥१८*॥[११]

॥ हरिश्रीनिधनम् ॥ वृषापवस्वधारया । वृषापवा ।
स्वधारया २ । मरुत्वतेचमाहो २ । त्सारा २ ३: । हाउ
वा । विश्वादा२३धा । नओ । जार्२सा२३४औहोवा ॥(१)
तन्वाधर्त्तारमोणियोः । तन्वाधर्त्ता । रमोणियो २: ।
पवमानसुवाहो २ । इग्रा२३म् । हाउवा । हिन्वेवा
२३जायि । षुवा । जार्२यि । ना२३४औहोवा ॥(२) अ
याचित्तोविपानया । अयाचित्ताः । विपानया २ । हरिः

* ऊ० गा० १८प्र० १ख० १९सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पवस्वधाहो२। राया२३। हाउवा। युजांवा२३जा
यि। षुचो। दा२ या२३४औहोवा। हरी३श्री२३
४ ५ः(३)॥ १ * ॥ [१२]

॥ गौषूक्तम् ॥ वृषापवस्वधौ। हौहोवाहायि। रया।
मरुत्वतेचमौ२। ऊवायि। ऊवा२यि। त्सारा२ः। वि
श्वादधानऔ२। ऊवायि। ऊवा२यि। जासा२३।
हो२वा२३४औहोवा॥(१) तन्त्वाधर्त्तारमौ। हौहोवा
हायि। णियोः। पवमानस्तुवौ२। ऊवायि। ऊवा२
यि। दृशा२म्। हिन्वेवाजेषुवौ२। ऊवायि। ऊवा
२यि। जासा२३। हो२वा२३४औहोवा॥(२) अया
चित्तोविपौ। हौहोवाहायि। नया। हरिःपवस्वधौ
२। ऊवायि। ऊवा२यि। राया२। युजंवाजेषु

* ऊ० गा० २०प्र० १ख० १सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　१　　१ ^ २
चौ२ । ऊवायि । ऊवा२यि । दाया२३ । हा२वा२
५र र　　२ १ र २ २ १ १ १ १
३४औहोवा । अग्निराऊता२३४५ः(३) ॥ ८ * ॥ [१३]

१ र　　र १　　२ १
॥ शाकलम् ॥ वृषापवा२स्वधारया । मरुत्वतेचमत्सा
२　　१　　१ र २ १　　१　　२
२३राः । वायिश्वा२ । दाधानओ२३ । ऊम् । जा३
५　　१ र　　र १　　र
४ ५ सो६हायि ॥(१) तन्त्वाधर्त्ता२रमोणियोः । पवमान
२ १　　१　　१　　१ ११　　१
सुवद्द२ ३शाम् । हायिन्वे२ । वाजेषुवा २ ३ । ऊम् ।
२　　५　　१ र　　र १
जा३४५यिना६हायि ॥(२) अयाचित्ता२विपानया । ह
२ १र　　२　　१　　१ र २ र　　१
रिःपवस्वधारा२३या । यूजा२म् । वाजेषुचो२३ । ऊम् ।
२　　५
दा३४३यो६हायि(३) ॥ १० † ॥ [१४] १०

अथ द्वितीयतृचे—प्रथमा ।

२ ३ १ २　　३ १ २ ३
वृषाशोणोअभिकनिक्रदद्गा
३ १ २　　३ २ ३ २
नदयन्नेषिपृथिवीमुतद्याम् ।

* ऊ० गा० २प्र० २ख० ९गा० ।　　† ऊ० गा० २०प्र० २ख० १०गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्दो" पात्रेषु चरणशील ! दीपनशील ! वा हे सोम ! "शतग्विनं"* शतसहस्रसङ्ख्याकाभिः गोभिः युक्तं "गवां पोषं" गवादीनां पुष्टिवर्द्धनं "स्वश्व्यं" शोभनाश्व-सङ्घ-सहितं "भगत्तिं" भगदत्तिं भजनीय-धन-दानञ्च † "ऊतये" रक्षणाय "नः" अस्माकम् "आवह" प्रापय। गवादीश्च तेषां वृद्धिं प्रयच्छे-त्यर्थः ॥ ३ ॥ २

तन्त्वानृम्णानीति पञ्चर्चं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ १ २ ३१२ ३ १ ३ १

तन्त्वानृम्णानिबिभ्रतꣳसधस्थेषुमहोदिवः।

१ २ ३ १ २

चारुꣳसुकृत्ययेमहे ॥ १ ‡ ॥

"महोदिवः" महतोद्युलोकस्य¶ "सधस्थेषु" सहस्थानेषु स्थितं, "नृम्णानि" धनानि § "बिभ्रन्तं" अस्मदर्थं धारयन्तं "चारुं" कल्याणं ‖ हे सोम ! "तं" तादृशं पवमान-लक्षणं "त्वा" त्वां "सुकृत्यया" शोभन-क्रियया "ईमहे" धनानि याचामहे** ॥ १ ॥

* 'शतग्विनं—शतसङ्ख्यातम्'—इति वि०।

† 'भगत्तिं—शोभमानप्रतिपत्तिम्'—इति वि०।

‡ ऋ० वे० ७, १, ५, १।

¶ 'महोदिवः—सकाशात्'—इति वि०।

§ 'नृम्णानि—धनानि बलानि वा'—इति वि०।

‖ 'चारुं—शोभनम्'—इति वि०।

** "ईमहे"—इति याच्ञाकर्मसु निघण्टौ प्रथमं पदम् (३, १९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ २     ३क    १र ३ १ २   ३ १ २
संवृक्तधृष्णुमुक्थ्यम्महामहिव्रतम्मदम् ।
३ १   २र ३ १ २
शतम्पुरोरुरुक्षणिम् ॥ २* ॥

हे सोम ! "संवृक्तधृष्णुं" संवृक्ताः सञ्छिन्नाः धृष्णवो धर्षणशीलाः शत्रवो येनासौ संवृक्तधृष्णुः, तम् †, "उक्थ्यं" उक्थार्हं प्रशस्यम्, ‡ "महामहिव्रतं" महीय-बहु-कर्माणं, ¶ "मदं" मदकरं "शतं" बहूनि "पुरः" शत्रूणां पुराणि "रुरुक्षणिं" विनाशयन्तम् ; त्वां धनानाम् ईमहे इति § सम्बन्धः ॥ २ ॥

अथ तृतीया ।

१ २    ३ २ ३क१र ३ १ २             ३ २
अतस्त्वारयिरभ्ययद्राजानꣳसुक्रतोदिवः ।
३ १ २ ३ १ २
सुपर्णोअव्यथीभरत् ॥ ३ ‖ ॥

---

* ऋ० वे० ७, १, ५, २ ।

† 'संवृक्तधृष्णुम्—अतिशयेन संवर्त्तकं, धृष्णुं धारणात्मकम्'—इति वि० ।

‡ 'उक्थम्—उक्थ्यानि स्तोत्राणि यत्र विद्यन्ते स उक्थ्यः, तम् उक्थ्यं सोमम्'—इति वि० ।

¶ 'महामहिव्रतं—महेति महान्तं शतमग्नं कर्म वा यत्र, स महिव्रतः, तं महिव्रतम्'—इति वि० । महदर्थशब्दद्वयश्रुतेरतिमहत्त्वं गम्यतइति भावः ।

§ पूर्वचर्चि श्रुतम् ।

‖ ऋ० वे० ७, १, ५, ३ । "रयिमभिराजः"—इति च तत्र पाठः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "सुक्रतो" शोभनकर्म्मन् * पवमान सोम! "रयिः" रयिम् धनम्प्रति "अभि अयत्" † अभिगमयति "राजानं" ‡ "त्वा" त्वाम् "अतः दिवः" अमुष्मात् द्युलोकात् "अव्यथी" व्यथा-रहितः "सुपर्णः" श्येनवत् ¶ "भरत्" आहरत्। तथाच श्रूयते—'आदाय श्येनोऽभरत् सोमम् ( ता० ब्रा० )'—इति॥

"अव्यथी"-"अव्यथिः"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी।

१ २ ३ १२ ३ १ २र ३१ २
अधाहिन्वानइन्द्रियञ्ज्यायोमहित्वमानशे।
३ १ २र
अभिष्टिकृद्विचर्षणिः ॥ ४ § ॥

"अधा" अथ "विचर्षणिः" कर्मणां विद्रष्टा ‖ "अभिष्टि-कृत्" यजमानानाम् अभीष्ट-फलस्य कर्त्ता सोमः** "इन्द्रियं" स्वकीयं फलं †† "हिन्वानः" प्रेरयन् "ज्यायः" प्रशस्यतरं "महित्वं" महत्वम् "आनशे" प्राप्नोति‡‡ ॥ ४ ॥

---

* 'सुक्रतो—सुक्रतु शोभनकर्म'—इति वि०।

† 'अयत्—आनयन्'—इति वि०।

‡ 'राजानं—सोमम्'—इति वि०।

¶ 'सुपर्णः—पक्षीभूत्वा'—इति वि०।

§ ऋ० वे० ७, १, ५, ४।

‖ 'विचर्षणिः—विविधानां पुरुषाणां स्वामी'—इति वि०।

** 'अभिष्टिकृत्—अभिष्टिः यजमानः तं यः करोति स अभिष्टिकृत्'—इति वि०।

†† 'इन्द्रियम्—इन्द्रस्य रूपं सोमम्'—इति वि०।

‡‡ 'आनशे—अश्नुव्याप्तौ'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१२ २ ३१ २ १ २२ ३ १ २

विश्वस्मादित्स्वर्दृशे साधारणꣳ रजस्तुरम्।

३ २ ३ २ ३ १ २

गोपामृतस्य विर्भरत्॥ ५ *॥ ३

"रजस्तुरम्" † उदकस्य प्रेरकम् "ऋतस्य" यज्ञस्य "गोपां" गोपयितारं‡ "विश्वस्मै" सर्वस्मै "स्वर्दृशे" देवाय ¶ "साधारणम् इत्" समानम् § आवसन्तं सोमं "विः" पक्षी ‖ श्येनो "भरत्" स्वर्गादाहरत्॥ ५॥ ३

अथ तृचात्मके चतुर्थसूक्ते—

प्रथमा।

२ १ २ ३ १ २ ३ १ २ ३ १ २

इषे पवस्व धारया मृज्यमानो मनीषिभिः।

१ २ ३ १ १२

इन्दो रुचाभि गा इहि॥ १ **॥

---

* ऋ० वे० ७, १, ५, ५। "विश्वस्मा इत्स्व०"—इति ख० पु० पाठः। "विश्वस्मादित्स्व०"—इति मु० पाठः।

† 'रजस्तुरं—रजःसंयुक्तम्'—इति वि०।

‡ 'गोपां—गमयाध्यानसंयुतम्'—इति वि०।

¶ 'स्वर्दृशे—स्वः स्वर्गलोकस्य, दृशे दर्शनाय'—इति वि०।

§ 'इत्—इति पदपूरणः'—इति वि०।

‖ 'विः—भक्षणीयम्'—इति वि०।

** छ० आ० ६, १, २, ९ (१ भा० ६४ पृ०) = ऋ० वे० ७, १, २८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्रो" सोम! "मनीषिभिः" ऋत्विग्भिः "मृज्यमानः" शोध्यमानः त्वम् "इषे" अस्माकमन्नाय "धारया" "पवस्व" क्षर। "रुचा" रोचमानेनान्धसा "गाः" पशून् "अभीहि" अभिगच्छ॥ १॥

अथ द्वितीया।

३ १ २र ३ २ ३ १ २
पुनानोवरिवस्कृध्यूर्जञ्जनायगिर्वणः।
१ २ २ २ २ १ २
हरेसृजानआशिरम्॥ २*॥

हे "गिर्वणः" गीर्भिर्वननीय! "हरे" हरितवर्ण सोम! "आशिरं"† क्षीरं प्रति "सृजानः" विसृज्यमानः "पुनानः" पूयमानः त्वं "जनाय"‡ जनार्थं "वरिवः"¶ धनम् "ऊर्जम्" § अन्नञ्च "कृधि" कुरु॥ २॥

अथ तृतीया।

३ २ ३ १ २ ३ १ २ ३ २
पुनानोदेववीतयइन्द्रस्ययाहिनिष्कृतम्।
३ २ २ १ २ ३२
द्युतानोवाजिभिर्हितः॥ ३ ॥॥ ४

* ऋ० वे० ७, १, ३८, ४।

† 'आशिरं—क्षीरं दधि वा'—इति वि०।

‡ 'जनाय—यजमानार्थम्'—इति वि०।

¶ 'वरिवः—वरिष्ठम्'—इति वि०।

§ 'ऊर्जम्—अन्नं यशो बलं वा'—इति वि०।

॥ ऋ० वे० ७, १, ३८, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम! "वाजिभिः" हविर्लक्षणान्नयुक्तैर्यजमानैः सह*

"द्युतानः" दीप्यमानः "देववीतये" यज्ञार्थं "पुनानः" पूयमानः

"हितः" हितकरः † त्वम् "इन्द्रस्य" "निष्कृतं" स्थानं "याहि"

गच्छ ॥

"हितः"-"यतः"—इति पाठौ ॥ ३ ॥ ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य

प्रथमः खण्डः ‡ ॥ १ ॥

---

द्वितीय-खण्डेण—

प्रथमतृचे—प्रथमा।

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २

अग्निनाग्निःसमिध्यतेकविर्गृहपतिर्युवा।

१ २ ३क २र

हव्यवाड्जुह्वास्यः ॥ १ § ॥

---

* 'वाजिभिः—वाजमन्नञ्च पुरोडाशादि-लक्षणं, तद्येषामस्ति ते वाजिनः ऋत्विग्यजमानाः तैर्वाजिभिः; अथवा वाजसनेयैः वाजिभिः अध्वर्युभिः'—इति वि०।

† 'हितः—निहितः स्थापित इत्यर्थः—इति वि०।

‡ 'बहिष्पवमानमुक्तम्'—इति वि०।

¶ 'सप्तदशस्तौमिकं भेदमाह। इदानीमाज्यानि। आग्नेयम्—इति वि०।

§ ऋ० वे० १, १, २२, ६।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अग्निः" आहवनीयाख्यः तस्मिन् प्रक्षिप्यमाणेन "अग्निना" निर्मन्थन-प्रणीतेन वा सह "समिध्यते" सम्यग् दीप्यते*। कीदृशोऽग्निः? "कविः" मेधावी "गृहपतिः" यजमान-गृहस्य पालकः "युवा" नित्य-तरुणः "हव्यवाट्" हविषोवोढा [ वहतेः "वहश्च (३, २, ६४)"—इति ण्वि-प्रत्ययः; 'णित्त्वादुपधा-वृद्धिः (७, २, ११५) 'गतिकारकोपपदात् कृत् (६,२,१३९)"—इत्युत्तर-पद-प्रकृति-स्वरत्वम् ] "जुह्वास्यः" जुहूरूपेण मुखेन युक्तः† [ हूयते अनयेति जुहूः "हुवः श्लुवच्च (उ०, २, ६१)"—इति क्विप्; तत्सन्नियोगाद् (३, २, १७८ वा०) दीर्घश्च; श्लुवद्भावात् द्विर्भावः; चुत्व-जश्त्वे; प्रातिपदिक-स्वरेणान्तो-दात्तः (फि०१, १); जुहूरास्यं यस्येति बहुव्रीहौ पूर्वपद-प्रकृति-स्वरत्वेन स एव शिष्यते (८, २, १); शेष-निघातः; यणादेशे "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (८, २, ४)"—इत्या-कारः स्वरितः ] ॥ १ ॥

अथ द्वितीया।

१ २र ३ १ २ ३ १ २ ३ १ २  
यस्त्वामग्ने हविष्पतिर्दूतन्देवसपर्यति।  
१ २ ३ १ २  
तस्यस्मप्राविताभव ॥ २ ‡ ॥

---

* 'अग्निनाग्निः समिध्यते—अग्नीनां वेवेत्याद्योन्याकरोति। तेन निर्मथ्याग्निना अग्निः समिध्यते सवनीयः'—इति वि०।

† 'जुह्वास्यः—जुह्वते आस्ये अस्य जुह्वास्यः। अथ जुहोति क्रिया अस्य आस्ये क्रियते। अथवा जुहूनामा शुक्र आस्यमूर्तो यस्य स जुह्वास्यः'—इति वि०।

‡ ऋ० वे० १, १, १२, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "अग्ने !" "देव !" "यः" "हविष्पतिः" यजमानः "दूतं" "त्वाम्" "सपर्यति" * परिचरति। तस्य यजमानस्य "प्राविता" "भव स्म" अवश्यं रक्षको भव। [ हूयत इति हविः "अर्चि-शुचि (उ०,२,१०७)"—इत्यादिना इसिः, प्रत्यय-स्वरेण इकार उदात्तः ( ३, १, ३ ), हविषः पतिः हविष्पतिः, "नित्यं समासेऽनुत्तरपदस्थस्य ( ८, ३, ४५ )"—इति षत्वम्, "पत्यावैश्वर्ये ( ६, २, १८ )"—इति पूर्वपद-प्रकृतिस्वरत्वम्। सपर्यति—सपर-शब्दात् "कण्ड्वादिभ्यो यक् ( ३, १, २७ )"—इति यक्, धातुप्रकरणात् गुणप्रतिषेधाद्यर्थात् यकः कित्त्वाच्च सपरशब्दस्य धातुत्वात्ततोविहितस्य यक आर्द्धधातुकत्वे सति "अतोलोपः(६,४,४८)"—इति लोपः, "सनाद्यन्ता धातवः (३,१, ३२)"—इति धातुसञ्ज्ञायां तिप्, "कर्त्तरि शप् (३,१,६८)", तस्मिन् पूर्वस्य "अतोगुणे ( ६, १, ९६ )"—इति पररूपत्वम्, यकः प्रत्यय-स्वरेणोदात्तत्वम् ( ३, १, ३ ), शपा सह एकादेशस्य "एकादेशउदात्त० ( ८, २, ५ )"—इत्युदात्तत्वम्, "तिङतिङः ( ८, २, २८ )"—इति निघातो न भवति "यद्वृत्तान्नित्यम् ( ८, १, ६६ )"—इति प्रतिषेधात् ] ॥ २ ॥

अथ तृतीया।

२ ३ २ ३ १ २     ३ १ २     ३ १ २
योऽअग्निन्देववीतये हविष्माꣳ आविवासति।

१ २
तस्मै पावक मृडय ॥ ३ † ॥ ५

* "सपर्यति"—इति परिचरणकर्मसु तृतीयं नैघण्टुकम् ( ३, ५ )।

† ऋ० वे० १, १, २३, ९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हविष्मान्" हविर्युक्तो "यः" यजमानः "देववीतये" देवानां हविर्लक्षणहेतुयागार्थम् "अग्निम्" "आविवासति" अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति *। हे "पावक" अग्ने! "तस्मै"† "मृड़य" तं यजमानं सुखय। [देववीतये—'वी गति-प्रजन-कान्त्यशन-खादनेषु (अदा०, उभ०)'—इत्यस्मादशनार्थात् क्तिन्, देवानां वीति र्यस्मिन् यागे स देववीतिः, "बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम्, "नब्विषयस्यानिसन्तस्य (फि०, २, ३)"—इति पर्य्युदासाद्धविः-शब्दोदात्तः, मतुपः सर्वानुदात्तत्वात् स एव शिष्यते। आविवासति—'वा गति-गन्धनयोः (अदा० प०)'—अस्मादन्तर्भावित-ण्यर्थादागमयितुमिच्छतीत्यर्थे सन्, आह्वानेच्छा; परिचर्यायां पर्यवस्यतीति विवासति-शब्दः परिचर्यार्थे निघण्टौ (३, ५, १०) पठितः, द्विर्भावः, अभ्यासस्य ह्रस्वः (७, ४, ५९), "सन्यतः (७, ४, ७९)"—इति इत्वम्, "ञ्नित्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तत्वम्, "तिङ्ङतिङः (८, १, २८)"—इति निघातो न भवति "यद्वृत्तान्नित्यम् (८, १, ६६)"—इति प्रतिषेधात्, "तिङि चोदात्तवती (८, १, ७१)"—इत्याङो "सहसुपेत्यच (२, १, ४) सहेति योगविभागादाङस्तिङा सह समासे समासान्तोदात्तत्वे प्राप्ते (८, १, २२३) "परादिश्छन्दसि बहुलम् (६, २, १९९)"—इत्युत्तर-पदाद्युदात्तत्वम्। तस्मै—"क्रियाग्रहणं कर्त्तव्यम् (२, ३, १३ वा०)"—इति सम्प्रदानत्वाच्चतुर्थी॥ ३॥ ५

---

* 'आविवासति—दीपयति'—इति वि०।

† 'तस्मै पावक—चतुर्थ्येषा द्वितीया-स्थाने भवति, तं पावकम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीयतृचे*—प्रथमा ।

२ १ २ ३१२३१२ ३ १ २
मित्रꣳहुवेपूतदक्षंवरुणञ्चरिशादसम् ।
१२२ २ ३ १ २
धियङ्घृताचीꣳसाधन्ता ॥ १ † ॥

अहमस्मिन् कर्म्मणि हविः-प्रदानाय "पूतदक्षं" ‡ पवित्रबलं "मित्रं" "हुवे" आह्वयामि [ ह्वयतेः "बहुलञ्छन्दसि ( २, ४, ७३ )"---इति शपोलुकि सति "ह्वः सम्प्रसारणम् ( ६, १, ३२ )"---इत्यनुवृत्तौ 'बहुलं छन्दसि ( ६, १, ३४ )"---इति सम्प्रसारणे उवङादेशः, "तिङतिङः ( ८, १, २८ )"--इति निघातः ]। तथा "रिशादसं" रिशानां हिंसकानाम् अदसमत्तारम् ¶ "वरुणञ्च" हुवे। कीदृशौ मित्रावरुणौ ? "घृताचीं"§ घृतमुदकमञ्चति भूमिं प्रापयति या धी येन कर्म्मणा तां घृताचीं "धियम्" "साधन्ता" साधयन्तौ ‖ [ 'राध साध संसिद्धौ

---

* 'मैत्रावरुणमाज्यम्'—इति वि० ।

† य० वे० २२, ५७ = ऋ० वे० १, १, ४, २ ।

‡ 'पूतदक्षं'—पूतं मेध्यं, दक्षं शीघ्रम्'—इति वि० ।

¶ रिशादसं—शत्रूणां हिंसकम्'—इति वि० ।

§ 'घृताचीं—'घृतमुदकं तस्य प्रदानसमर्थाम्'—इति वि० ।

‖ महीधरस्त्वेवमिमां व्याचष्टे—'द्वे मधुच्छन्दोदृष्टे गायत्र्यौ आद्या लिङ्गोक्तदेवत्या। मित्रं वरुणञ्चाहं हुवे आह्वयामि। कीदृशम्? पूतदक्षम् पूतं पवित्रं सदाचारं दक्षयति धन-पुत्रादिभिर्वर्द्धयति पूतदक्षस्तम् दक्षकम्यर्थोरित्यस्माण्णिजन्तात् कर्मण्यण्। रिशादसम् रिशन्ति हि सन्ति रिशा दुष्टाः ताम् समन्तादस्यति नाशयति रिशादसः तम्। रिश हिंसायाम् दस उपक्षये। द्वयोर्विशेषणे। कीदृशा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(दि०,प०)'—इत्यस्मादन्तर्भावितण्यर्थाल्लटः शत्रादेशे (६,१, १६१), श्नुं बाधित्वा व्यत्ययेन (३,१,८५) शप्, अदुपदेशत्वात् उपरि शतृ-प्रत्ययस्य ल-सार्वधातुकानुदात्तत्वम्, द्वितीयाद्विवचनस्य शपश्च "अनुदात्तौ सुप्पितौ (३,१,४)"—इत्यनुदात्तत्वे, "धातोः (६, १, १६२)"—इति धातुस्वर एव शिष्यते, "सुपां सु-लुक्० (७, १, ३९)"—इत्यादिना विभक्तेराकारादेशः ॥१॥

अथ द्वितीया।

ऋतेनमित्रावरुणावृतावृधावृतस्पृशा।

क्रतुम्बृहन्तमाशाथे ॥ २ * ॥

हे "मित्रावरुणौ!" [ मित्रश्च वरुणश्चेति मित्रावरुणौ "देवता द्वन्द्वे च (६, ३, २६)"—इति पूर्वपदस्यानङादेशः, तादृशौ ] युवां "क्रतुं" प्रवर्त्तमानमिमं सोमयागम् "आशाथे" आनशाथे व्याप्नुवन्तौ [ "छन्दसि लुङ्-लङ्-लिटः (३, ४, ६)" —इति वर्त्तमाने लिट्, नुड़भावश्छान्दसः ]। केन? "ऋतेन" अवश्यम्भावितया सत्येन फलेन अस्मभ्यं फलं दातुमित्यर्थः। कीदृशौ युवाम्? "ऋतावृधौ" [ 'ऋतमित्युदक-नाम (निघ० १, १२, ६), सत्यं वा यज्ञं वा'—इति यास्कः † ] उदकादीना-

वुभौ? धियं कर्म साधन्ता साधयन्तौ। कीदृशीं धियम्? घृताचीं घृतमच्यते हूयते यत्र ताम्'—इति।

* ऋ० वे० १, १, ४, २।

† 'ऋतमित्युदकनाम'—इत्यंशस्तु द्वितीय-पञ्चविंशे, 'सत्यं वा यज्ञं वा'—इति तु चतुर्थानविंशे इति विवेकः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्यतमस्य वर्द्धयितारौ*। अतएव 'ऋतस्पृशा' उदकादीन् स्पृशन्तौ†। कीदृशं क्रतुम्? "बृहन्तम्" अङ्गैरुपाङ्गैश्चाति-प्रौढम्॥ २॥

अथ तृतीया।

३ १२ ३ १ २र ३ १ २३१ २
कवीनोमित्रावरुणातुविजाताउरुक्षया।
१ २ ३ १ २
दक्षन्दधातेअपसम्॥ ३ ‡॥ ६

"मित्रावरुणा" मित्रावरुणौ एतौ देवौ "नः" अस्माकं "दक्षं" बलम् "अपसं"¶ कर्म च "दधाते" पोषयतः, कीदृशौ? "कवी" मेधाविनौ, "तुवि-जाता" तुविजातौ बहूनामुपकारकतया समुत्पन्नौ, "उरुक्षया" बहु निवासौ [ मित्रावरुणौ—मित्र-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः ( फि० १, १ ), वरुण-शब्दो नित्स्वरेणाद्युदात्तः ( ६, १, १९७ )। तुविजातौ—बहूना-मुपकारकतया तत्सम्बन्धित्वेन जाता विति षष्ठीसमासे समासा-न्तोदात्तत्वम् ( ८, १, २२३ ), चतुर्थीसमासे हि "क्ते च (६, २, ४५)"—इति क्वचित् पूर्वपदप्रकृतिस्वरः स्यात्। उरूणां बहूनां क्षयौ उरुक्षयौ, 'क्षि निवास-गत्योः ( तु० प० )'—इति धातोः क्षियन्त्यस्मिन्निति क्षय इत्यधिकरणे एव अच्-प्रत्ययान्तस्य "चितः

* 'ऋतावृधौ—ऋतमन्नं तद् वर्द्धयतः'—इति वि०।

† 'अग्निष्टोमादिकम्'—इति वि०।

‡ ऋ० वे० १, १, ४, ४।

¶ 'अपसं—धनम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(६, १, १६३)"—इत्यन्तोदात्तत्वे प्राप्ते "चयो निवासे (६, १, २०१)"—इत्याद्युदात्तत्वं विहितम्, समासे तु "समासस्य (८, १, २२३)"—इत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरप्रकृति-स्वरेण (६, २, १३८) प्राप्तमुत्तरपदाद्युदात्तत्वम् यद्यपि थाथादि-स्वरेणान्तोदात्तत्वेन बाध्यते तथापि "परादिश्छन्दसि बहुलम् (६, २, १९९)"—इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यम्। दक्षः—दक्षतेरुत्साहकर्मणो ञित्त्वादाद्युदात्तः (६, १, १९७)। आप्यते फलमनेनेत्यपः कर्म, "आपः कर्माख्यायां ह्रस्वो नुट् च वा (उ० ४, १०९ दी० वृ०)"—इत्यसन्तस्य अपसस्यावेद्इत्यादौ नित्त्वा (६, १, १९७) दाद्युदात्तस्यापस्-शब्दस्यात व्यत्ययेन प्रत्ययाद्युदात्तत्वम् (३, १, ३)] ॥ ३ ॥ ६

अथ तृतीयतृचे*—प्रथमा।

१ २ १ ३ २र ३ १ २र
इन्द्रेणसꣳहिदृक्षसेसञ्जग्मानोअबिभ्युषा।

३ १ २ ३ १ २
मन्दूसमानवर्चसा ॥ १ † ॥

हे मरुद्गण! त्वम् "इन्द्रेण" "सञ्जग्मानः" सङ्गच्छमानः "संदृक्षसे हि" सम्यग् दृश्येथाः खलु, अवश्यमस्माभिर्द्रष्टव्य-

* 'ऐन्द्रमाज्यम्'—इति वि०।

† ऋ० वे० १, १, १२, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मित्यर्थः *। कीदृशेनेन्द्रेण? "अबिभ्युषा" भीति-रहितेन कीदृशाविन्द्रमरुद्गणौ? "मन्दू" नित्य-प्रमुदितौ, † "समान-वर्चसा" तुल्य-दीप्ती [ 'पुरा कदाचित् वृत्र-बध-दशायाम् इन्द्रस्य सखायः सर्वे देवा वृत्र-श्वासेनापसारितास्तदानीमिन्द्रस्य वृत्र-सम्बन्धि-सकल-सेना-जयार्थं मरुद्भिः सङ्गमो भूतः'—सोऽयमर्थो "वृत्रस्यश्वसथाय ( छ० आ० ४, १, ४, २; ६५६ पृ० )"—इति मन्त्रे सङ्गृहीतः; 'इन्द्रो वै वृत्रं हनिष्यन्'—इति ब्राह्मणे (ता०) प्रपञ्चितश्च; इन्द्र-शब्दः परमैश्वर्यवन्तं मरुद्गणञ्चाभिधत्ते, तदानीमिन्द्रस्य सम्बोधनं वह्निरेवाध्याहर्त्तव्यम्। तथाचेयमृक् यास्केनैवं व्याख्याता—"इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्, समानवर्चसेत्येतेन व्याख्यातम् (४, १२)"—इति। सन्दृचसे—सम्पश्येथाः "दृशेश्चेति वक्तव्यम् ( ७, १, ७ वा० )"—इत्यात्मनेपदम्, दृशेः "लिङर्थे लेट् (३, ४, ७ )"—इति प्रार्थनायां लेट्, थासस्से ( ३, ४, ८० ), "लेटोऽडाटौ ( ३, ४, ९४ )"—इत्यडागमः, "सिब्बहुलं लेटि ( ३, १, ३४ )"—इति सिप्, "सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)"—इति गुणाभावः, व्रश्चादिना ( ८, २, ३६ ) षत्वम्, "षढोः कः सि ( ८, २, ४१ )"

* 'इन्द्रेण सं हि दृक्षसे मरुद्गण इति वाक्यशेषः। अथवा व्यत्ययेन व्याख्या क्रियते—मरुद्गणेन दृश्यसे इन्द्रः। अथवा आदित्य इन्द्रोऽभिधीयते, मरुद्गणा रश्मिगणास्तैः सह दृक्षसे। अथवा इन्द्रेण आदित्येन सङ्गमानः सङ्गच्छमानः'—इति वि०।

† 'मन्दू—मदन-स्वभावेन'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



—इति कत्वम्, "आदेश-प्रत्यययोः (८, ३, ५९)"—इति सिपः षत्वम्, बहुल-ग्रहणात् सिपः परस्ताच्छबपि भवति, सिपा व्यवधानात् पश्चादेशो न भवति, शपः पित्त्वादनुदात्तत्वम् (३, १, ४), उत्तरस्य ल-सार्वधातुकानुदात्तत्वम् (६, १, १८६), धातुस्वर एव शिष्यते (६, १, १६२), हि-शब्द-योगात् "तिङ-तिङः (८, १, २८)"—इति निघातो न भवति "हि च (८, १, ३४)"—इति प्रतिषेधात्। सञ्जग्मानः—गमेः सम्पूर्वात् छन्दसि लुङ्लङ्लिटः (३, ४, ६)"—इति वर्त्तमाने लिट्, "समोगम्यृच्छि० (१, ३, २९)"—इत्यात्मनेपद-विधानात् लिटः कानजादेशः (३, २, १०६), द्विर्भावः (६, १, ८), हलादि-शेषः (७, ४, ६०), अभ्यासस्य चुत्वम् (७, ४, ६२), "गमहन० (६, ४, ९८)"—इत्युपधा-लोपः, कानचश्चित्त्वादन्तोदात्तत्वम्, गति-समासे (२, २, १८), कृदुत्तरपदप्रकृतिस्वरत्वम् (६, २, १३९)। अबिभ्युषा—'ञि भी भये (जु०, प०), पूर्ववल्लिट् (३, ४, ६), "शेषात् कर्त्तरि० (१, ३, ७८)" —इति परस्मैपदम्, "क्वसुश्च (३, २, १०७)"—इति लिटः क्वसुरादेशः, तस्य कित्त्वाद् गुणाभावः (१, १, ५), अभ्यासस्य ह्रस्व-जश्त्वे (७, ४, ५९)—(८, ४, ५४) क्रादिनियमात् प्राप्तइट् (७, २, १३) "वस्वेकाजाद्धसाम् (७, २, ६७)"—इति नियमात् निवर्त्तते नञ्समासे तृतीयैकवचने भत्वाद "वसोः सम्प्रसारणम् (६, १, १३१)"—इति वकारस्य उकारादेशः, "सम्प्रसारणाच्च (६, १, १०८)"—इति पूर्वरूपत्वं बाधित्वा "एरनेकाच (६, ४, ८२)"—इति यणादेशः, अव्यय-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पूर्वपदप्रकृतिस्वरत्वम् ( ६, २, ११८ ), पूर्वेण सह संहितायाम् ओकारस्य "एङः पदान्तादति ( ६, १, १०९ )"—इति पररूपत्वे प्राप्ते "प्रकृत्यान्तः पादमव्यपरे ( ६, १, ११५ )"—इति प्रकृतिभावः। मन्द—'मद स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु' ( भ्वा०, आ०, ), "इदितो नुम् धातोः ( ७, १, ५८ )"—इति नुमागमः, कुरित्यनुवृत्तौ "खरु-शङ्कु-पीयु-नीलङ्गु-लिगु ( उ० १, ३६ )"—इत्यत्राविभक्तिक-निर्द्देशादन्तेर्ह्रिङ्गुरितिवद्भावान्तरादपि कुरित्युक्तम्, प्रत्ययस्वरेणान्तोदात्तः ( ३, १, ३ ), द्विवचने सौ "प्रथमयोः पूर्वसवर्णः (६, १, १०४), तृतीयैकवचने च "सुपां सु लुक्० (७, १, ३९)"—इत्यादिना पूर्वसवर्णदीर्घत्वम्, समानं वर्चो ययोरिति वा यस्येति वहुव्रीहिः, द्विवचने "सुपां सु-लुक्० ( ७, १, ३९ )"—इत्याकारः, समान-पदस्य प्रातिपदिकान्तोदात्तत्वम् ( फि० १, १ ), बहुव्रीहौ पूर्वपद-प्रकृति-स्वरेण ( ६, २, १ ), तदेवावशिष्यते ॥ १ ॥

अथ द्वितीया।

१ २र १ २उ ३ १ २ ३ १ २ ३ २

आदहस्वधामनुपुनर्गर्भत्वमेरिरे।

१ २ ३ १ २ ३ १ २

दधानानामयज्ञियम् ॥ २ * ॥

अहेत्यवधारणार्थः † ]। "आत् अह" वर्षार्त्तोरनन्तरमेव "स्वधामनु" इतःपरं जनिष्यमाणमन्नमुदकं वा अनुलक्ष्य महतो

* ऋ० वे० १, १, ११, ४।

† "अहइति च ह इति च विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्यते। अयमहेदं करोत्वयमिदं तु करिष्यतीति"—इति निरु० १, ५



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



देवा: "पुन: गर्भत्वम् आ ईरिरे" मेघ-मध्ये जातस्य गर्भाकारं प्रेरितवन्त:* [ प्रतिसंवत्सर मेवं कुर्वन्तीति दर्शयितुं पुन:-शब्द: प्रयुक्त:]। कीदृशा मरुत:? "यज्ञियं" यज्ञार्हं "नाम" "दधाना:" धारयन्त:। [सप्तसु गणेषु मरुतामीदृक् वातानामीदृक् चेत्यादीनि यज्ञ-योग्यानि नामान्यन्यत्राम्नातानि। "अन्ध:"—इत्यादिष्वष्टाविंशति-सङ्ख्याकेष्वन्ननामसु "उर्क्"(१५),"रस:" (१६), "स्वधा" (१७)—इति पठितम्, (निघ० २, ७) "अर्ण:"—इत्यादिष्वेकशत-सङ्ख्याकेषूदक-नामसु च "तेज:" (८६), "स्वधा" (८७), "अचरम्" (८८)—इति पठितम् (निघ० १, १२)। "आत्"-"अह"-निपातावाद्युदात्तौ (फि० ४, १२)। स्वधा—स्वं लोकं दधाति पुष्णातीति स्वधा, "आतोऽनुपसर्गेक: (३, २, ३), कृदुत्तरप्रकृतिस्वरत्वम् (६, २, १६८)। अनु-पुन:-शब्दौ निपातावाद्युदात्तौ (फि०, ४, १२)। गर्भस्य भावो गर्भत्वं प्रत्ययस्वर: (३, १, ३)। एरिरे—अन्तर्भावितण्यर्थात् 'इण् गतौ (अदा०, प०)'—इत्यस्मादनुदात्तेत: परस्य लिटो झस्य इरेच्, चित्वादन्तोदात्त: (६, १, १६२), "सह सुपा (२, १, ४)"—इत्यत्र "सुपा" योगविभागादाङा सह तिङ: "समासस्य (८, १, २२३)"—इत्यन्तोदात्तत्वम्, "इजादेश्च गुरुमतोऽनृच्छ: (३, १, ३६)"—इत्याम् न भवति मन्त्रत्वात् † अह-शब्द-योगान्निघाताभाव: "तु-पश्य:

* 'आदित्य-रश्मय उत्पद्यन्ते, सविता सह गच्छन्ति, तै: पुनरस्तमिते सवितरि गर्भत्वं यान्ति'—इति वि०।

† "कास्प्रत्ययादाममन्त्रे लिटि (३, १, ३५)"—इति सूत्रादिह 'अमन्त्रे'—इत्यनुवृत्तं रिति भाव:।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रश्यताहैः पूजायात् (८,१,३९)"—इति निषेधात्। दधानाः—शानचश्चित्वादन्तोदात्तत्वे प्राप्ते (६, १, १६२) "अभ्यस्तानामादिः (६, १, १८९)"—इत्याद्युदात्तत्वत्। यज्ञमर्हति यज्ञियम्, "यज्ञर्त्विग्भ्यां घ-खञौ (५, १, ७१)"—इति घ-प्रत्ययः "आयन्नेयोनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् (७,१,२)"—इतीयादेशः प्रत्ययस्वरेण इकार उदात्तः (३, १, ३)]॥ २॥

अथ तृतीया।

३ १२ ३ २ ३ १ ५ ३१ २
वीड़ चिदारुजत्नभिर्गुहाचिदिन्द्रवह्निभिः।
१ २ ३ १ ३ १ २
अविन्दउस्रिया अनु ॥ ३ * ॥ ७

अस्ति किञ्चिदुपाख्यानम्—'पणिभिर्देवलोकाद् गावोऽपहृताः अन्धकारे प्रक्षिप्ताः ताश्चेन्द्रो मरुद्भिः सहाजयत'—इति। एतच्च बह्वृचानुक्रमणिकायां सूचितम्—"पणिभिरसुरैर्निगूढा गा अन्वेष्टुं सरमादेत शुनीन्द्रेण प्रेषिता ता ऋग्भिः पणयोऽमिवीयन्तः प्रोचुः"—इति। मन्त्रान्तरेऽपि दृष्टान्ततया सूचितम्—"निरुद्धा आपः पणिनेव गावः"—इति] तदेव उपाख्यान मभिप्रेत्योच्यते—हे "इन्द्र!" "वीडु चित्"† दृढमपि दुर्गमस्थानम् "आरुजत्नुभिः" ‡ अभिभञ्जद्भिः "वह्निभिः" वोढृभिः अन्यत्र

* ऋ० वे० १, १, ११, ५।

† 'चित्—इति पदपूरणः। वीडु अन्तरिक्षे स्थितः'—इति वि०।

‡ 'अन्तरिक्षे स्थिता जगच्छोषयन्ति आरुजत्नवः'—इति वि०।

¶ 'दहनात्मकैरग्निभिः—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नेतुं समर्थैः मरुद्भिः सहितस्त्वं "गुहा चित्" गुहायामपि स्थापिता "उस्रियाः" गाः "अन्वविन्दः †" अन्विष्य लब्धवानसि । [ "ओजः" (१), "पाजः"(२)—इत्यादिष्वष्टाविंशति-सङ्ख्याकेषु बल-नामसु "दक्षः"(१३) "वीलु"(१४) "च्यौत्नम्" (१५)—इति पठितम् । ( ८, ९ ) नव-सङ्ख्याकेषु गो-नामसु "अघ्न्या"(१), "उस्रा" (२), "उस्रिया" (३)—इति पठितम् निघ० (२, ११ )। वीडु—प्रातिपदिक-स्वरः ( फि० १, १ )। चित्—आदिरुदात्तः । आरुजत्नुभिः—'रुजो भङ्गे ( तु० प० ) इत्यस्मादौणादिकः क्नुच् प्रत्ययः, कित्त्वाद् (१, १, ५) गुणाभावः, चित्त्वादन्तोदात्तत्वम् ( ६, १, १६ ) समासे कृदुत्तर-पदप्रकृतिस्वरत्वञ्च (६, २, १६० )। गुहा—सप्तम्यां डादेशः (७, १, ३९ ), "ग्रामादीनाञ्च ( फि०, २, १५ )"—इत्याद्युदात्तः । वह्निभिः—"वहि-श्रि-यु-श्रु-ग्ला-हा-त्वरिभ्यो निः (उ० ४, ५१)"—इति नि-प्रत्ययः, नित्त्वादाद्युदात्तः । अविन्दः—'शेमुचादीनाम् ( ७, १, ५९ )"—इति नुमागमः, लुङ्-लङ्-लृङ्क्ष्वडुदात्तः ( ६, ४, ७१ )। वसन्तीति उस्रियाः वसोः कर्त्तरि यक् प्रत्ययः, षत्वाभावश्च बाहुलकादूहनीयः ( ३, १, ८५ ), उक्तं हि 'यत्र पदार्थविशेष सुक्तं प्रत्ययतः प्रकृतेश्च तद् ग्राह्यम् ( ३, १, ८५ भा० )'—इति, इकारः प्रत्ययस्वरेणान्तोदात्तः ( ३, १ ३ )॥ ३॥ ७

---

० 'उस्रियाः—आदित्यरश्मयः—इति वि०।

† 'अविन्दः विदॢ लाभे ( तुदा० प० )—इत्यस्येदं रूपम्'—इति, 'अनु—आनुपूर्व्येण' इति च वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थे तृचे* प्रथमा।

१ २ ३ १ २ २ ९ ३ १   २र ३ २ ३ २
ताहुवेययोरिदम्पप्ने विश्वम्पुराकृतम्।
३ १ २र
इन्द्राग्नीनमर्द्धतः॥ १† ॥

"ता" तौ तादृशौ "इन्द्राग्नी" "हुवे" आह्वये। "ययोः" इन्द्राग्न्योः "पुरा" पूर्वस्मिन् काले "कृतं" "विश्वं" सर्वम् "इदं" पूर्वास्वृचु कीर्त्तितं वीर्यं "पप्ने" पन्यते ऋषिभिः स्तूयते;—ताविन्द्राग्नी हुवे इत्यन्वयः। तौ चेन्द्राग्नी न "मर्द्धतः" [ मर्द्धतिः हिंसाकर्मा (निघ०२, १८, १४) ] स्तोतॄन् अहिंस्तः। अतोऽस्मान् आहुतौ रक्षतामिति भावः॥ १॥

अथ द्वितीया।

३ १ २ ३ २ ३ १ २   ३ १ २
उग्राविघनिनामृधइन्द्राग्नीहवामहे।
१ २   ३ १ २
तानोमृडातईदृशे॥ २‡ ॥

"उग्रा" उग्रौ उद्गूर्ण-बलौ अतएव "मृधः" शत्रून् "विघनिता" विघनितौ विशेषेण हतवन्तौ "इन्द्राग्नी" "हवामहे" आह्वयामहे। तौ चेन्द्राग्नी "ईदृशे" अस्मिन् सङ्ग्रामे "नः"

---

* 'ऐन्द्राग्नमाज्यम्'—इति वि०।

† ऋ० वे० ४, ८, २७, ४।

‡ ऋ० वे० ४, ८, २७, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi


अस्मान् "मृड़ातः" सुखयताम् [ यद्वा मृड़ातिः उपदयाकर्मा ; नोऽस्माकं मृड़ातः उपदयां कुरुताम् ] ॥ २ ॥

अथ तृतीया।

२ ३ २ १ २र ३ १ २र
हथोवृत्राण्यार्य्याहथोदासानिसत्पती।
२ २उ ३ २ ३ १ २
हथोविश्वाअपद्विषः ॥ ३* ॥ ८

हे इन्द्राग्नी ! "आर्या" आर्यैः कर्मानुष्ठातृभिः कृतानि "वृत्राणि" उपद्रवजातानि "हथः" हिंस्थः। तथा "सत्पती" सतां पालयितारौ सन्तौ "दासानि" दासाः कर्महीनाः† शत्रवः, तैः कृतानि चोपद्रवजातानि हथः। अपि च "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुभूताः प्रजाः "अप हथः" विनाशयथः अतोऽस्माकमप्येव मेव कुरुता मिति भावः ॥

"हथः"-"हनः"—इति पाठौ ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य द्वितीयः खण्डः ‡ ॥ ४ ॥

---

* ऋ० वे० ४, ८, २८, १।

† 'दासानि—यातुधानीमि रक्षः-पिशाचादीनि'—इति वि०।

‡ 'उक्तं प्रातःसवनम्'—इति वि०।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीयखण्डे*

प्रथमतृचे—प्रथमा ।

३ १ २र ३ १ ३ १ २ २ २ २ १ २
अभिसोमासआयवःपवन्तेमद्यम्मदम् ।
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
समुद्रस्याधिविष्टपेमनीषिणोमत्सरासोमदच्युतः ॥ १ † ॥

"आयवः" गमन-शीलाः "सोमासः" सोमाः "मद्यं" मदकरं मदम् आत्मीयं रसम् "अभिपवन्ते" अभितो निर्गमयन्ति । कुत्रेत्युच्यते "समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रिते पवित्रे यद्वा समुद्रस्य यस्मात् समुद्द्रवन्ति रसास्तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने पवित्रे निर्गमयन्ति । कीदृशाः ? "मनीषिणः" मनस ईशितारो "मत्सासः" मदकराः "मदच्युतः" मदस्राविणः ॥

"विष्टपे"-"विष्टपि"—इति पाठौ, "मदच्युतः"-"स्वर्विदः" इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २र ३ २ ३ १ २ ३ १ ३ २ ३ २
तरत्समुद्रम्पवमानऊर्म्मिणाराजादेवऋतम्बृहत् ।
१ २ ३ १ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ ३ १
अर्षामित्रस्यवरुणस्यधर्म्मणाप्रहिन्वानऋतम्बृहत् ॥२‡॥

---

* 'इदानीं माध्यन्दिनं सवनमच्यते । तत्रोच्यन्ते—गायत्री-वैष्टम्भादीनि सामानि, सास्तां नामत आर्षेयमुक्तम्'—इति वि० ।

† ऋ० आ० ६, १, ३, ८ ( २भा० ९६पृ० )=ऋ० वे० ७, ५, १४, ४ ।

‡ ऋ० वे० ७, ५, २५, १ । "समुद्रियः"—इति च तत्र पाठः ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पवमानः" पूयमानः "देवः" द्योतमानः "बृहत्" अत्यन्तम् * "ऋतम्" सत्यभूतः † "राजा" सोमः "समुद्रम्" अन्तरिक्षं कलशं वा "ऊर्मिणा" धारया ‡ "तरत्" तरति "हिन्वानः" प्रेर्यमाणः । "ऋतम्बृहत्" अत्यन्तं सत्यभूतः स सोमः "मित्रस्य वरुणस्य" मित्रावरुणयोः "धर्मणा" धारणार्थं "प्र अर्षा" प्रार्षति प्रकर्षेण गच्छति ¶ ॥

"अर्षा"-"अर्षन्"—इति पाठौ ॥ २ ॥

अथ अध्यास्याख्या तृतीया ।

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २र
नृभिर्येमाणोहर्यतोविचक्षणोराजादेवःसमुद्र्यः ॥ ३ § ॥ ९

"नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "येमानः" नियम्यमानः "हर्यतः" स्पृहणीयो "विचक्षणः" विद्रष्टा "देवः" दीप्यमानः "समुद्र्यः" अन्तरिक्षे भवः ‖ "राजा" सोमः इन्द्रार्थं पवते इति शेषः ॥

"येमाणः"-"येमानः" इति पाठौ ॥ ३ ॥ ९

---

* 'बृहत्—महत् अथवा बृहत्साम'—इति वि० ।

† 'ऋतं—सत्यम् अन्नम् प्रजापतिः यज्ञं वा'—इति वि० ।

‡ 'ऊर्मिणा—उदकसङ्घातेन'—इति वि० ।

¶ 'अर्षा—द्रष्टा'—इति वि० ।

§ छ० आ० ६, १, ४, ३ ( २भा० ११२पृ० )=ऋ० वे० ७, ५, १७, ४ ।

‖ "समुद्रः"—इत्यन्तरिक्ष-नामसु पञ्चदशं नैघण्टुकम् ( १, ३ ) । 'समुद्र्यः—समुद्रात्मकः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १र र२ र१२ र१
॥ पौरुमद्गम् ॥ अभिसोमासआयवः। औहोवा।
२र १र १२ १ २
एहिया। हाउ। पवन्तेमा२दियम्मदम्। समुद्रा१
१ २ १२३ ५ १
स्या२। धायिविष्टपा३यि। मानीषा२३४यिणाः। मत्सा।
२ ५ १ २ २
रासौवाओ२३४वा। हा३हायि। मदा५च्युताः ॥(१)
२ १र र २ १ २ र १ १ र
मत्सरासोमदच्युतः। औहोवा। एहिया। हाउ। म
१र १२ १ २ १ १ १
त्सरासो२मदच्युतः। तरात्सा१मू२। द्राम्यवमा३। ना
१ २ ५ १र १ २ ५ १
ऊर्म्मा२३४यिणा। राजा। दायिवौवाओ२३४वा। हा
२ ४ १र र २र १ १ १ २ १ २र
३हायि। ऋता५म्बृहात् ॥(२) राजादेवऋतम्बृहत्। औ
१ २र र र १र १२ १
होवा। एहिया। हाउ। राजादेवा२ऋतम्बृहत्। अ
२ १ २ १ २ २ ५ १
र्षामा१यिना२। स्यावरुणा३। स्याधर्म्मा२३४णा। प्र
२ ३ ५ २ १ ४
हायि। न्वानौवाओ२३४वा। हा३हायि। ऋता५म्बृ
४
हात्। हो५इ। डा(३) ॥ १४ * ॥ [१]

* ऊ० गा० २प्र० १ख० १४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र र र र
॥ उभयतःस्तोभं गौतमम् ॥ हावभिसोमासआयवो

१ २र १ ७ ३र २
हाउ। पावन्तेम। दियाम्मदा२३४म्। हाहोयि। स

१ र २१र र २ ३र २ १
मुद्रस्याधिविष्टपे। मानीषिणा३४ः। हाहोयि। मात्स

२ ३र २ २ १ ५ ४ ५
रासा३४ः। हाहो३। मदो२३४वा। च्यू५तोई हायि॥(१)

२र र र र १ २र १ ७
हाउमत्सरासोमदच्युतोहाउ। मात्सरासः। मदाच्यु

३र २ १ २ १ २र १ र
ता२३४ः। हाहोयि। तरत्समुद्रम्पवमा। नाऊर्म्मि

२ ३र २ १ र २ ३र २
णा३४। हाहोयि। राजादायिवा३४ः। हाहो३यि।

२ १ ५ ४ ५ २र र र र
ऋतो२३४वा। बृ५हो ६ हायि॥(२) हाउराजादेवऋत

१ र २र १ ७ ३र र
म्बृहद्धाउ। राजादेवः। ऋताम्बृहा२३४त्। हाहोयि।

१ र २ १ २ १ २ १ २ ३र २ १
अर्षामित्रस्यवरुण। स्याधर्मणा ३४। हाहोयि। प्रा

२ ३र २ २ १ ५ ४
हिन्वाना३४ः। हाहो३यि। ऋतो२३४वा। बृ५ हो ६

५
हायि(३) ॥ १५ * ॥ [२]

* ऊ० गा० ११प्र० १ख० १५गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ४र ५र
॥ द्विहिङ्कारं वामदेव्यम् ॥ अभिसो२३मास आयवाः ।
१ र र २ ३ र २ १
पाऽवन्ते मघम्मदꣳसमुद्रस्याधिविष्टपाऽयिमनीहो३ । ऊ
१ २ १ र २ ३र २ १
म्मा २ । पा२३यिणः । मत्सरासोमदौहो३ । ऊम्मा २ ।
२ १ २ ४ ५ १ १ ४र ५
ऽच्युता । औ३होवा ॥(१) मत्सरा २ ३ सोमदच्युताः ।
१ र र २ ३र २ १
मात्सरासोमदच्युतम्तरत्समुद्रम्पवमाऽनऔहो३ । ऊम्मा
२ १र र र २ ३र १ १
२ । मा२३यिणा । राजादेवाऽऋतौहो३ । ऊम्मा २ ।
१ ४ ५ २र १र ४ ५
वृहात् । औ२३होवा ॥(२) राजादा २ ३ यिवऋतम्बृ
१ र र र १ ३र १
हात् । राऽजादेवऋतम्बृहादर्षामित्रस्यवरुणाऽस्यधौहो३ ।
१ १ २ १ र २ ३र २ १
ऊम्मा २ । मा२३णा । प्रहिन्वानाऽऋतौहो३ । ऊम्मा
१ ४ ५ ४
२ । बृहात् । औ२३होवा । हो५ई । डा(३) ॥ ७ * ॥ [३]

१ १ १ र १
॥ गायत्रपार्श्वम् ॥ आभी । सोमास आ३१उवा२३ ।
१ २र १ २१ २ १ २१र२र १
या२३४वाः । पवन्ते मदियम्मदꣳसमुद्राधिविष्टपेमनीषि

* ऊ० गा० ४प्र० २ख० ७सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १११११ २१२ ३२ १ ४ १
णा२३४५ः। मत्सारा१सा२ः। मदा३। ऊ२३वा३। च्यू

१११२ १ २ १ ८ २
ता२३४५ः॥(१) मात्सा। रासोमदा३१उवा२३। च्यू

५ ० १८८ २ १२१ २ १ १८ ८ १
२३ ४ताः। मत्सरासोमदच्युतस्तरत्समुद्रम्पवमानऊर्म्मि

२११११ २८१ २ ३२ १ ४
णा२३४५। राजादा१यिवा२ः। ऋता३म्। ऊं२३वा

१ ११११ २८१ २ २
३। बृहा२३४५त्॥(२) राजा। दायिवऋता३१उवा२

५ १८८२८१२१२ १ ८ २११११ २
३। बृ२३ ४हात्। राजादेवऋतम्बृहद्र्षामित्रस्यवरुण

१ २११११ २१ २ ३२ १
स्यधर्म्मणा२३४५। प्रहायिन्वा१ना२ः। ऋता३म्। ऊं

४ १ ११११
२३वा३। बृहा२३४५त(३)॥ ८ *॥ [४]

५ २ ४८५४८ ५ १ १८
॥ पौरुहन्मनम्॥ अभिसो३मास आयवाः। पावन्ते

१ १ १ २ ८ १
म। दियाम्मा१दा२म्। मादा२म्। सामुद्रस्या। धा

२ १ २ १ २ ३ ५
यि। विष्टपा३यि। विष्टपा३यि। मानीषा२३४यिणाः।

१ १८ १ २ ३ ५ ४
मात्सरासो। मादच्यू२३४ताः। मदा ५ च्युताः॥(१)

---

* ऊ० गा० ४प्र० १ख० ८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २र १ २ १ १ २
मत्सरासः। मदाच्यू१ता२ः। च्यूता२ः। तारत्समु।
१ २ १ २ १ २ ३ ५ १
द्राम्। पवमा३। पवमा३। नाऊर्मा२३४यिणा। रा
२र र १ २ ३ ५ ४ ५र र
जादेवाः। आर्त्तम्बृ२३४हात्। ऋताउम्वृहात्॥(२) राजा
२ ४ ५ ४ ५ १ र २र १ २ १
दा३यिवऋतम्बृहात्। राजादेवः। ऋतांबृ१हा२त्। आ
र २ १ २ १ २ १ २ ३
र्षामित्र। स्या। वरूणा३। वरूणा३। स्याधर्मा२ ३
५ १ २ र १ २ ३ ५ ४
४णा। प्राहिन्वानाः। आर्त्तंबृ२३४हात्। ऋताउम्बृहा
४
त्। हो५ई। डा(३)॥ ८ *॥ [५]

५ २ ४र ५ ४र ५ १ २र
॥ द्वैगतम्॥ अभिसो३मासआयवाः। पावन्ते म।
१ २ ३ २ ३ २ २ १ र
दियाम्मा१दा२म्। समू३। हौ३हो३वा। द्रस्याधिवि
र २ १ १ ३ ५र र
षयेमानो१षिषा२ः। मत्सा२३। रा२सा२३४औहोवा।
२ १ ३ १ १ १ १ ५ २ ४र ५ ४ ५
ए३। मदा२च्युता२३४५ः॥(१) मत्सरा३सोमदच्युताः।
१ २र १ २ ३ २ ३ २ १
मात्सरासः। मदाच्यू१ता२ः। तरा३त्। हौ३हो३वा।

* ऊ० गा० ४प्र० २ख० ८गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र २ १र १ २
समुद्रस्पवमानाऊ१र्मिणा२। राजा२३। दा२यिवा२३

५रर २ १ २१११ ५रर
४औहोवा। ए३। ऋता२म्बृहा२३४५त् ॥(२) राजा

२ ४५४ ५ १ २ २र १ २
दा३यिवऋतंबृहात्। राजादेवः। ऋतांबृ१हा२त्।

१ २ ऽ २ २ १ ७
अर्पा३। हौ३। हो३वा। मित्रस्यवरुणस्याधर्माणा२।

१ १ ३ ५र र २ १ ३
प्रहा२३यि। न्वा२ना२३४औहोवा। ए३। ऋता२म्बृहा

११११
२३४५त्(३) ॥ १० * ॥ [६]

१ रर र १
॥ हारायणम् ॥ अभिसोमौहो२यिसआयवाः। पा

र २ २ १ २
वन्तेमद्यम्मदम्। समूद्रा३स्या। धिविष्टपायि। मना

२ १ १ रर २ १ ५
३हायि। पायिणा२ः। मत्सरासोमदोवा३ओ२३४वा।

४ ५ रर १
च्यू५तो६हायि ॥(१) मत्सरासोहो२यिमदच्युताः। मा

रर २ २ २
त्सरासोमदच्युतः। तरात्सा३मू। द्रपवमा। नऊ३

२ १रर र २ १ ५ ४
हा। मायिणा२। राजादेवऋतोवा३ओ२३४वा। बृ

* ऊ० गा० ४प्र० २अ० १०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५　　१ २र२　　१　　२र
५होईद्वायि ॥(२) राजादेवीद्वो२ऋतंबृहात्। राजादे

२　　२　　१　　१
वऋतंबृहत्। अर्यमा३ यिवा। स्यवरुणा। स्यधा३

२　　१　　१　र　　२　१　५　४
हा। माणा२। प्रहिन्वानऋतोवा३ओ२३४वा। बृ५हो

५
ईद्वायि(३) ॥ ११ * ॥ [७]

२　र　　　　३
॥ अच्छिद्रम् ॥ अभिसोमा। सआ३१उवा२३। या

५　　१　२र१　२१३११११　　२　र
२३४वाः। पवन्तेमदियम्मदा२३४५म्। पवन्तेमा। दि

५　　२　१　र　२१र२र
या३१उवा२३। मा२३४दाम्। समुद्रस्याधिविष्टपेमनी

१३११११　　२　　१　　र२
षिणा२३४५ः। समुद्रस्या। धिवि। ष्टा। पेमना३१उ

५　　२　१र२२　१३११११
वा२३यि। षी२३४णाः। मत्सरासोमदच्युता२३४५ः।

२　र　　　　५　　२
मत्सरासाः। मदा३१उवा२३। च्यू२३४ताः ॥(१) मत्स

र　　　　５　　२　१र२
रासाः। मदा३१उवा२३। च्यू२३४ताः। मत्सरासो

२　१३११११　　२　२
मदच्युता२३४५ः। मत्सरासाः। मदा३१उवा२३। च्यू

* ज० गा० ४प्र० २ख० ११सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ १ २र र १ ३१११११ २
२३४ता:। तरत्समुद्रम्पवमानऊर्मिणा२३४५। तरत्स

१ २ १ ५
मू। द्रम्पव। मा। नऊ३आउवा२३। मो२३४णा।

१र र २र१ २ १ २ २र र र
राजादेवऋतंबृहा१त्। राजादेवा:। ऋता३१उवा२३।

५ २र र र१२१ २ २र र र
बृ२३४हात्। राजादेवऋतंबृहा१त्। राजादेवा:। ऋ

५
ता३१उवा२३। बृ२३४हात्। राजादेवऋतंबृहा१त्।

१र २ १ २
राजादेवा:। ऋता३१उवा२३। बृहात्। अर्षामित्रस्य

१ २ १ ३११११ र र १ २
वरुणस्यधर्मणा२३४५। अर्षामित्रा। स्यवरु। णा। स्य

५ १ २र १२ १ २
धा३१उवा२३। मा २ ३४णा। प्रहिन्वानऋतंबृहा१त्।

२ र ५
प्रहिन्वाना:। ऋता३१उवा२३। बृ२३४हात्(३) ॥१२*॥[८]

२ र र १ ५ १
॥ रौरवम् ॥ अभिसोमासा३आया२३४वा:। पाव

र र र ३ २ १ २
न्तेमद्यम्मद७समुद्रस्याधिविष्टपेमनारयिषिणा:। ओहा

२ १ २र २ १ २ २
३उवा। मत्सरासोमदा२३हायि। ओहा३उवा। च्यु

* ऋ० मा० ४प्र० २ख० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ४ ५ २ ररर १ ५
ता। औ ३ होवा ॥(१) मत्सरासोमा३दच्यू२३४ताः।
१ रर र ३ २ १
माऽत्सरासोमदच्युतस्तरत्समुद्रम्पवमानऊर्म्मिणा। औ
२ १ १रर र २ १ १ २
हा३उवा। राजादेवऋता२३ऽहायि। औहा ३ उवा।
१ ४ ५ २र र र १ ५
बृहात्। औ २ ३ होवा ॥(२) राजादेवआ३त्तंब२३४हा
१ रर र २ ३
त्। राजादेवऋतंबृहद्र्षामित्रस्यवरुणस्यधार्म्मणा।
१ २ २ १ र २ १
औहा३उवा। प्रहिन्वानऋता२३ऽहायि। औहा३उ
२ १ ४ ५ ४
वा। बृहात्। औ२३होवा। हो५ई। डा(३) ॥१३*॥[९]
१ २ २र र १र१२
॥ मानवोत्तरम् ॥ होवायि। अभिसोमासआयवः।
१ र ७१र १
होवायि। पावन्तेमद्यम्मदम्। सामुद्रस्या। धायि
० १ ७ ३ ५ २ १
विष्टया३१यि। मनार्‍यिषा२३४यिणाः। मत्सारा २ ३
२ २ ३ ५र र ३ ५ १
साइः। मार्‍दा२३४औहोवा। च्यू२३४ताः ॥(१) होवा
२ १रर२ १२ १ रर
यि। मत्सरासोमदच्युतः। होवायि। मात्सरासोम

* ऊ० गा० ७प्र० १ख० १३सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ० २ १ ७ २ ७ ३
द्च्युतः । जारत्समु । द्राम्यवमा३१ । नऊर्म्मा२३४यि

५ १र १ २ १ ३ ५र र
णा । राजादा२३यिवा३ः । आर्त्ता २ ३ ४ औहोवा ।

३ ५ १ र र २र१२१ २ १
व २३४ हात् ॥(२) होवायि । राजादेवऋतम्बृहत् । हो

र र ७र २ १ ० २
वायि । राजादेवऋतंबृहत् । आर्षामित्र । स्यावरुणा

७ ३ ५ २१ २ १ ३
३१ । स्वधार्म्मा२३४णा । प्रहायिन्वा२३ना३ः । आर्त्ता

५र र ३ ५
२३४औहोवा । बृ२३४हात्(३) ॥ १४ * ॥ [१०]

१ २ १ र र र १ र
॥ आनूपबाध्यश्वम् ॥ अभीअभी । सोमासा३आया

१ २र १ ० १
१वा२ः । पावन्तेम । दियाम्मा १ दा२म् । सामू२

१ १ र२१र २ १ र २
द्रास्या२ । धिविष्टपेमनीषा२३यिणाः । मत्सारा ३ सा

१ ४ २ ५ १ २ १ २
३ः । मार२३दा३ । च्यू२३४५तोई्हायि ॥(१) मत्सामत्सा ।

र र १ २ १ १ १ र२
रासोमा३दाच्यू१ता२ः । तारा२त्सामू२ । द्रपवमान

१र २ १र २ २ १ ४
ऊर्म्मा२३यिणा । राजादा३यिवा३ः । आ २३ त्ता३म् ।

* ऊ० गा० ७प्र० २ख० १४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



बृ३४५द्धोई्हायि॥(२) राजाराजा। देवकृ३तांबृ१हा

र्२त्। राजादेवः। कृतांब१हार्२त्। आर्षा २ मायि

चार्२। श्यवरुणस्यधर्मार२३णा। प्रहायिन्वा ३ ना ३ः।

आर२३र्त्ताा३म्। बृ३४५द्धोई्हायि(३)॥ १५ ॥[११]

॥ वाम्रम् ॥ अभिसोमासआ। हाउहा३यि। यार

३४। वायवोवा। पवाहोर्२। तेमाहोर्२। दायआा

दार्२म्। सामुद्रस्या। धिवायिष्टापेमनाउवा३। ऊ

३ ४ पा। षिणार्२ः। मात्सार्२रासार्२ः। मद। च्यू

२ता२३४औहोवा ॥(१) मत्सरासोमदा। हा३हा३यिं।

च्यू२३४। तश्चुतोवा। मत्साहोर्२यि। रासाहोर्२।

मादचूरतार्२ः। तारत्समु। द्रम्यावामा। नआउवा३।

ऊ३४पा। मिणार्२। राजार्२दायिवार्२ः। कृतम्।

---

* ऊ० गा० ७प्र० २ख० १५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



बृ२हा२३४औहोवा ॥(२) राजादेवऋतम्। हा३हा३यि। बृ२३४। हहृहोवा। राजाहो२यि। देवाहो२। आ त्वंव हा२त्। आर्षामित्र। स्वधाउवा३। ऊ३४पा। मणा२। प्राहा२यिन्वाना२ः। ऋतम। बृ२हा२३४ औहोवा। ऊ२२३४पा(३) ॥ १६ ॥ [१२]

॥ अभीवर्त्तम् ॥ अभा३यिसो३मा५स्वआयवोवा। पा वन्तेम। दियाम्मा१दा३म्। सामुद्रस्या३१२३४। धि विष्टपे। मनायिषा१यिणा२ः। म२पारा१सा२ः। मदा ३। च्यू२३४५। ता२३४५ः(१) ॥ १६* ॥ [१३]

॥ कालेयम्† ॥ मत्सरा३सोमदच्यूताः। मत्सारासो। मदच्यूता२३ः। तरत्समू३। द्रा२३४म्। पवमानऊ।

* ऊ० गा० ७प्र० २खा० १६सा०। † "महाकालेयम्"—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ १र २ र २ ४
मा३यिणा। राजादेवौ। वा३४३वा। ऋतापुम्बृहात्।
५
होऽपूई। डा(२)॥ १७*॥ [१४]

५ १ ४र५४र ५ १ ० १र
॥ गौङ्गवम्॥ अभिसो३मासआयवाः। पावा२। ते
३ २ ४ ५ २ १र
मद्दिया३म्। मादाम्। समुद्रस्याधिविष्टा२३पा २ यि।
३·२ ४ ५ २ १ र र २ २ ४
मना३यिषायिणाः। समुद्रस्याधिविष्टये। मना३यिषा
५ १ २र १ २ २ १ ५
यिणाः। मात्सरा। सा। औ३हो। मदो२३४वा।
४ ५ ५ २ ४र५४ ५ १
च्यू५तो६हायि॥(१) मत्सरा३सोमदच्युताः। मात्सा२।
१र र ३ २ ४ ५ १ २ १ १ ३ २
रासोमदा३। च्यूताः। तरत्समुद्रम्पवा२३मा३। नऊ
४ ५ १ २ १ र १ २ ४ ५ १
३र्मायिणा। तरत्समुद्रम्पवमा। नऊ३र्मायिणा। रा
र २र १ २ २ १ ५ ४ ५
जादे। वा। औ३हो। ऋतो२३४वा। बृ५हो६हा
५र र २ ४ ५र ५ १ १र २
यि॥(२) राजादा३यिवऋतंबृहात्। राजा२। देवऋ
२ ४ ५ १र २ १ २ १ १ ३ २
ता३म्। बृहात्। अर्षामित्रस्यवरु२३णा२। स्वधा३

* ऊ० गा० ७प्र० २खा० १७सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ १ २ १ २ १ ३ २ ४ ५ १ २र
र्माणा । अर्षामित्रस्यवरुणा । स्यधाऽर्माणा । प्राह्विन्वा ।

१ २ २ १ ५ ४ ५
ना । औ३होवा । ऋतोऽ२३४वा । बृ५हो६हायि(३)॥१८*॥[१५]

१ २र १ २
॥ भारद्वाजम् ॥ अभिसोमा । सआया१ वा२: ।

१ २र १ २ १ २र
पावन्ते मद्यम्मदम् । समूद्रा१स्या२ । धायिविष्टपे । म

१ २ १ २ १ ३ ५र
नायिषा१यिणा२: । मत्सारा१सा२३: । मा२दा२३४औ

र ३ ५
होवा । च्यू२३४ता:(१) ॥ १५ † ॥ [१६]

२ र १ २ ३ २ ४ ५
॥ मैधातिथम् ॥ अभिसोमोहायि । सआ३यावा: ।

१ २ २ १ २ १ २
पवन्ता२हो१यि । माऔ३हो । दायाउवा । मादाउ

१ र २ २ १ २ १
वा । समुद्रस्याधिविष्टपाऔ३हो । मानाउवा । षा

२ १ र २ २ १ २र १ ३र
यिणाउवा । मत्सरासाऔ३हो । मदा । औहो । वा

५ ४ ५ २ र १ २ ३
हो२३४वा । च्यू५तो६हायि॥(१) मत्सरासोहायि । म

२ ४ ५ १ २ २ १ २
दा३च्यूता: । मत्सरा२हो१यि । साऔ३हो । मादा

* ऊ० गा० ८प्र० २खा० १८सा० । † ऊ० गा० ९प्र० २खा० १५सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ २ १
उवा । च्यूताउवा । तरत्समुद्रम्पवमाऔ३हो । ना
२ १ २ १२ २ २ २ २ १
आउवा । मायिणाउवा । राजादेवाऔ३हो । ऋता ।
२२ १ ३२ ५ ४ ५ २२ २ २ १
औहो । वाहो२३४वा । बृ५हदो६हायि ॥(२) राजादेवो
१ ३ २ ४ ५ १२ २ २
हायि । ऋता३म्बहात् । राजादा२हो१यि । वाऔ३
१ १ २ १ २ १ २
हा । आर्त्तोउवा । बृहाउवा । अर्षामित्रस्यवरुणा
२ २ १ २ १ २ १ २ २
औ३हो । स्याधाउवा । माणाउवा । प्रहिन्वानाऔ३
२ १ २२ १ १२ ५ ४ ५
हो । ऋता । औहो । वाहो२३४वा । बृ५हदो६हा

यि(३) ॥ ६* ॥ [१७]

४ ३ २ ४२ ५ २ ४ ५ १२ १
॥ उत्सेधम् † ॥ अभिसोमासआयवः । पव । तेमा
१२ ४२ ५ २ १ २
३४औहोवा । दियम्मदारम् । हा३१उवा२३ । ऊ३४
५ १ २ ४ ५२ ४ ५ १ २ १
पा । समू३द्रस्या । औहोवाहायि । धायिविष्टपायि ।
२२ १ १२ २ ५ ३ २ ४२
भनीषायिणः । हा३१उवा२३ । ऊ३४पा । मत्सा३रा

* ऊ० गा० १प्र० ३ख० ६सा० । † "उत्सेधः"—इति ख० पु० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र ४ ३ २ ४ ४ ३र
सः । औहोवायि । मदा३च्यूपूता६५६ः ॥(१) मत्सरा

४र ५ ४ ५ ३र २ ३र ४र ५ २ १
सोमदच्युतः । मत्स । रासा३४औहोवा । मदच्युताऽ

२ ५ ३ र ४ ५र ४
रः । हा३१उवा२३ । ऊ३४पा । तरा३त्समु । औहो

५ १ २१ २ र १ २र
वाहायि । द्रापवमा । नऊर्म्मायिणा । हा३१उवा२३ ।

२ ५ ३र २ ४र ५प ४ ५ ३ २ ४
ऊ३४पा । राजा३देवः । औहोवाहायि । ऋता३म्बृ५

३र ४र र ३ ४ ३ ४ ५ र र ३र २
हा६५६त् ॥(२) राजादेवऋतंबृहत् । राजा । देवा

३र ४र ५ २ १ २
३४औहोवा । ऋतंबृहाऽरत् । हा३१उवा२३ । ऊ३४

५ १ २ ४ ५र ४ ५ १ ११ १
पा । अर्षा३मित्रा । औहोवाहायि । स्यावरुणा । स्य

१ १र २ ५ १ २ ४र
धर्म्माणा । हा३१उवा२३ । ऊ३४पा । प्रहा३यिन्वानः ।

५र ४ ५ ३ १ ४ ३ १ १
औहोवाहायि । ऋता ३ म्ब ५ हा ६ ५६ त् । औ २ ३

१ १
४ ५(३) ॥ ३ * ॥ [१८]

२ र र र रर र
॥ सदोविशीयम् ॥ अभिसोमासआयवओहाओहा३

* ऊ० गा० ११प्र० १ अ० २खा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र र र २ १ २र१ २ १ ऽ २
ए। औहोऔहोऽ३वा। पवन्तेमदियम्मदम्। ओ३हा।

१ र २१र२र१ २ ऽ २ १ २
समुद्रस्याधिविष्टपेमनीषिणः। ओ३हा। मत्सारा१सा

ऽ २ ऽ २ २ ऽ २ ऽ २
२ः। ओ३हा। ओ३हा३ए। औ३होयि। औ३हो

२ १ ३ ५र र २ र र
३वा। मद। च्यू२ता२३४औहोवा ॥(१) मत्सरासो

र र र २ र र र २ १र
मदच्युतओहाओहा३ए। औहोऔहो३वा। मत्सरा

र २ १२ ऽ २ १ २ १ २र १र २र
सोमदच्युतः। ओ३हा। तरत्समुद्रम्पवमानऊर्म्मिणा।

ऽ २ १र २ ऽ २ ऽ २ २
ओ३हा। राजादा१यिवा२ः। ओ३हा। ओ३हा३ए।

ऽ २ ऽ २ २ १ ३ ऽ
औ३होयि। औ३हो३वा। ऋतम्। बृ२हा२३४औ

र १र र १र र र र २ र र
होवा ॥(२) राजादेवऋतंबृहदोहाओहा३ए। औहो

र २ १र र २र१२१२१ ऽ २ १ र
औहो३वा। राजादेवऋतंबृहत्। ओ३हा। अर्षा।

२ १२१ २ १ १र ऽ २ १ २
मित्रस्यवरुणस्यधर्म्मणा। ओ३हा। प्रहायिन्वा१ना२ः।

ऽ १ ऽ २ २ ऽ २ ऽ २ २
ओ३हा। ओ३हा३ए। औ३होयि। औ३हो३वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ३ ५र र २ र १ २ १ १
ऋतम् । बृ २ हा २ ३ ४ औहोवा । सदोविश्वा २ ३

१ १
४ पुः(३) ॥ १६ * ॥ [१९]

५ २ ४र ५ ४र ५ २ १
॥ जनित्राद्यम् ॥ अभिसो३मासआयवाः । ऊवेहो

१ र २ १ र
२यि । पवन्तेमदियाम्मा१दा २म् । समुद्रस्याधिविष्टपा

३ २ ३ ५ १ २ १ र २
२यि । मनार्२यिषार्२३४यिणाः । मत्सा३होयि । रासा

१ २ १ ३ ५र र ५ २ ४र
३हो । मद । च्यू२तार्२३४औहोवा ॥(१) मत्सरा३सो

५ ४ ५ २ १ १ र र २
मदच्युताः । ऊवेहो २यि । मत्सरासोमदाच्यू१ता २ः ।

१ ३ २ ३ ५ १र २ १
तरत्समुद्रम्पवमा२ । नऊर्म्मा२३४यिणा । राजा३होयि ।

र २ १ २ १ ३ ५र र ५र र
देवा३हो । ऋतम् । बृ२हा२३४औहोवा ॥ २) राजा

२ ४ ५ ४ ५ २ १ १र र र २
दा३यिवऋतंबृहात् । ऊवेहो २यि । राजादेवऋतंबृ

१ र ३ २ ३ ५ १
१हा २त् । अर्षामित्रस्यवरुणा२ । स्यधार्म्मा२३४णा । प्र

---

* ऊ० गा० १२प्र० २अ० १६सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ र २ १ २ १ २ ५र
हाउयिहोयि । न्वानाउहो । ऋतम् । ब२हा२३४औ

र २ १ १११ १
होवा । जनित्रा२३४५म्(३) ॥ ८ * ॥ [२०]

२ र र र रर र र
॥ दैर्घश्रवसम् ॥ अभिसोमासआयवओहा । ओहा३

२ १ २र १ २ ऽ २ ऽ २ २
ए । पवन्तेमद्यिम्मदम् । ओ३हा । ओ३हा३ए३४ ।

३ २ ३ २ १ २ र १ र २ ऽ २
समू३४द्रस्या । धायिविष्ट । पेमानीषिणाः । ओ३हा ।

ऽ २ २ ३ २ ३र २ २ १ ५
ओ३हा३ए३४ । मत्सा३४रासा३ः । मदो २ ३ ४ वा ।

४ ५ २ र र र र र २
च्यू५तोऽहायि ॥(१) मत्सरासोमदच्युतओहाओहा३ए ।

१र र २ १ २ ऽ २ ऽ २ २ ३ २
मत्सरासोमदच्यूतः । ओ३हा । ओ३हा३ए३४ । तरा

२ २ १ २ र १ र २ ऽ २ ऽ
३४त्समू । द्राम्पव । मानाऊर्म्मिणा । ओ३हा । ओ

२ २ ३र २ ३र २ २ १ ५ ४
३हा३ए३४ । राजाजा३४देवा३ः । ऋतो२३४वा । ब्ः

५ २र र र र र र २ १र
५हो६हायि ॥(२) राजादेवऋतंबृहदोहाओहा३ए । रा

र २र १ २ १ २ १ ऽ २ ऽ २ २ ३ २
जादेवऋतंबृहात् । ओ३हा । ओ३हा३ए३४ । अर्षा

---

* ऊ० गा० १४प्र० १ख० ९सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१२ १ २ १ २ ३ २ ३
३४मित्रा। स्यावरु। णस्याधर्म्मणा। ओ३वा। ओ
२ ३ ३२ ३र २ २ १ ५ ४
३वा३ए३४। प्रवा३४यिन्वानाइ:। ऋतो२३४वा। बृ
५
५वो६वायि(३)॥५*॥ [२१]

१ २ १ र २
॥सन्तनि॥ अभीवाउ। सोमासआ३१उवा २३।
५ १ २र१ २ १र २१र२र
या२३४वा:। पवन्ते मदियम्मद९ंसमुद्रस्याधिविष्टपेमनी
१२ ११११ १ २ १ र २
षिणा२३४५:। मत्साहाउ। रासोमदा३१उवा २ ३।
५ २ १र र २ १ र २ १र र २ १२
च्यू२३४ता:॥(१) मत्सरासोमदच्यूतोमत्सरासोमदच्युत
१ २ १ २र र १ ३११११ १र २ १
स्तरत्समुद्रम्पवमानऊर्म्मिणा२३४५। राजावाउ। दा
२ ५ १रर २र११२१
यिवऋता३१उवा२३। बृ२३४वात्॥(२) राजादेवऋतं
२१र र २र१२११२१ र २११२ २ १ ३११११
बृवद्राजादेवऋतंबृहद्षामित्रस्यवरुणस्यधर्म्मणा२३४५।
१ २ १ २२ ५
प्रवायिवाउ। न्वानऋता३१उवार२३। बृ२३४वात्(३)॥

॥७†॥ [२२]

* ऊ० गा० १४प्र० २ख० ७गा०।

† ऊ० गा० १४प्र० २ख० ७गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ आष्टादंष्ट्रोत्तरम् ॥ अभिसोमास आयवऐयादौ। होइवा। पवन्ते मद्यिम्। मादा२३म्। ऐया२३त्। औ२३होवा। समुद्रस्याधिविष्टपेमनो। षायिणा२३ः। ऐया२३त्। औ२३होवा। मत्सरासोमद। च्यूता२३ः। ऐयी२३त्। औ२३होवा२३४३। ओ२३४५ई। डा ३)॥

॥ २ * ॥ [२२]

॥ आभीशवोत्तरम् ॥ अभिसोमास आयवए। ए। पवन्तेमाइदायम्मादम्। सा२३४मू। हा३हा। द्रस्याधिविष्टपेमानीश्षिणाः। मा२३४त्सा। हा३हायि। रासोमदो२३४वा। च्यू५तो६हायि॥(१) मत्सरासोमदच्युत ए। ए। मत्सरासो३मादच्यूतः। ता२३४रात्। हा३हायि। समूद्रम्पवमानाऊ१र्म्मिणा। रा२३४जा। हा

* ऊ० गा० १६प्र० २ख० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २१ ५ ४ ५
३ हायि । हायिवक्कृतोर२३४वा । बृ५हो ई हायि ॥(२)

२र र र र र र १ १
राजादेवञ्ऋतंबृहदे । ए । राजादे वा३आर्त्तंबृहात् ।

२ ५ २ १ १ ० २
आर२३४र्षा । हा ३ हायि । मित्रस्यवरुणस्याधर्म्मणां ।

१ ५ १ २ १ २१ ५ ४
प्रा२३४हायि । हा३हायि । ण्वाऋतोर२३४वा । बृ५

५
होईहायि(३) ॥ २ * ॥ [२३]

५ २ ४र ५र४५ १
॥ आष्कारनिधनम् † ॥ अभिसो३मा सऽआयवाः । पा

२र १ २ १ २१ २
वन्तेम । दिया२३म्मदाउ । वा३२ । समुद्रस्या । धि

३११ २१र ५ १ २ १५र २
विष्टपायि । मनीषा२३४यिणाः । मा२३त्सा । रासोम ।

१ ५ २ ४र ५४ ५ १ २र
दच्यू२३४५ताई५६: ॥(१)मत्सरा३सोमऽदच्युताः । मात्सरा

१ २ १२ १ २ ३२
सः । मदा२३च्युताउ । वा २ ३ । नरत्सम् । द्रम्यव

१ २१र ५ १ २ १र १ १
मा । नऊर्म्मा२३४यिणा । रा२३जा । देवऋ । तंबृ

५र र २ ४ ५४ ५ १ र
२३४५हाई५६त् ॥(२) राजादा३यिवऋऽतंबृहात् । राजा

---

* ऊ० गा० १६प्र० १ध० ३सा० । † "आष्कारणिधनं काश्यपम्"—इति ख० पु० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २ १र १ १ २ २
देवः। ऋतार३बृहाउ। वा३२। अर्षामित्रा। स्वव

२ १ २ १ ५ १ २ १र २ १
रुणा। स्यधर्म्मा२३४णा। प्रा२३हायि। न्वानऋ। तं

३ १ १ १ १
बृ२३४५द्धाई५६त्। आ२३४५ष(३) ॥ २* ॥ [२४]

२ र र ३ ५
॥ मानवाद्यम् ॥ अभिसोमा। सआया२३४वाः। २।

१ २प १ २ १ २ र
पावन्तेम। दियाक्षमा१दा२म्। सम्। ऊ। द्रस्या।

१ ३ २ १ ३ ५ १ २ र १
धायिविष्टपा३यि। मनार्यिषा२३४यिणाः। मत्सरासा

१ ३ ५र र ३ ५ २
२३ः। मा२दा२३४औहोवा। च्यू२३ ४ ताः ॥(१) मत्स

र ३ ५ २ ३ ५ १ २र
रासाः। मदच्यू२३४ताः। मदाच्यू२३४ताः। मात्सरा

१ ३ १ २ १ ० २
सः। मदाच्यू१ता२ः। त। रत्। समु। द्राम्पवमा

१ ३ ५ १र २र र १ १ ३
३। नऊर्म्मा२३४यिणा। राजादेवा२३ः। आर्त्ता

५र र ३ ५ २ र र
२३४औहोवा। बृ२३४हात् ॥(२) राजादेवाः। ऋतं

३ ५ २ २ ५ १ र २र १ २
बृ२३४द्धात्। ऋतांबृ२३४हात्। राजादेवः। ऋतांव

* ऊ० गा० १८प्र० २ख० २सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१हा२त्। ख। षा। मित्र। स्य। वरुणा३। स्वधा
२म्मर्मा२३४णा। प्रचिन्वानार३ः। आ२र्त्ता२३४औहोवा।
बृ२३४हात्(३)॥ १० *॥ [२५]

॥ महावैष्टम्भम्॥ अभिसोमोहायि। स्त्रायवोवा।
पावन्तोम। दियाम्मा१दा२३म्। होवा३हायि समु
द्रस्याधिविष्टपे। मनायिषा १ यिणा२३ः। होवा३हा
यि। मत्सारा१सा२३ः †। होवा३हायि। मद। च्यू२
ता२३४औहोवा॥(१) मत्सरासोहायि। मदच्युतोवा।
मात्सरासः। मदाच्यू१ता२३ः। होवा३हायि। तर
त्समुद्रम्पवमा। नऊर्म्मी१यिणा२३। होवा ३ हायि।
राजादा१यिवा२३ः। होवा३हायि। ऋतम्। बृ२हा२
३४औहोवा॥(२) राजादेवोहायि। ऋतंबृहोवा। रा

* ऊ० गा० १८प्र० २ख० १०गा०। † "मत्सारासा१२"—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २र १ २ १ २ २ १ र १
जाद्वे वः। ऋतांबृ१हा२३त्। हौवा३हायि। अर्षामि

१ २ १ २ १ २ १ २ २ १
ऋत्यवरुण। स्वधाम्र्मा१णा२३। हौवा३हायि। प्रहा

र १ २ २ १ १
यिन्वा१ना२३। हौवा३हायि। ऋतम्। बृ२हा२३४

५र र
औहोवा(३) ॥ १० *॥ [२६] ९

अथ द्वितीयत्र्चे—प्रथमा।

३ १ २र ३ १ २र
तिस्रोवाचईरयतिप्रवह्निः

३ १ २ ३ १ २र १ २
ऋतस्यधीतिम्ब्रह्मणोमनीषाम्।

१ २ ३ १ २ ३ १ २ २
गावोयन्तिगोपतिम्पृच्छमानाः

१ २ ३ १ २ २ २
सोमंयन्तिमतयोवावशानाः ॥ १† ॥

"वह्निः" वोढा यजमानः "तिस्रोवाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं "ब्रह्मणः" परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याणीं वाचं प्रेरयति। किञ्च "गोपतिं" वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः"

* ऊ० गा० १२प्र० २ अ० १०खा०।

† ऋ० आ० ६, १, ४, १ (२भा० ११९पृ०) = ऋ० वे० ७, ५, १७, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पृच्छमानाः" पृच्छन्त्यः सत्यः यन्ति स्व-पयसा मिश्रयितुम् अभिगच्छन्ति । तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारश्च "सोमं" "यन्ति" स्तोतुमभिगच्छन्ति ॥ १ ॥

अथ द्वितीया ।

१ २ १ २ ३ १ २ ३ २उ
सोमङ्गावोधेनवोवावशानाः

२ १ २ ३ १ २ ३ १ २
सोमंविप्रामतिभिः पृच्छमानाः ।

१ २ ३ १ २ ३ १ २ ३
सोमःसुतऋच्यतेपूयमानः

१ २ ३ २ ३ २ १ १ २
सोमेअर्कास्त्रिष्टुभःसन्नवन्ते ॥ २* ॥

"धेनवः" † प्रीणयित्र्यो "गावः" "सोमं" "वावशानाः" कामयमाना भवन्ति, "विप्राः" मेधाविनः स्तोतारः ‡ "सोमं" "मतिभिः" स्तुतिभिः ¶ "पृच्छमानाः" पृच्छन्तो भवन्ति "सुतः" अभिषुतः "सोमः" "पूयमानः" ऋत्विग्भिः "ऋच्यते"

---

* ऋ० वे० ७, ४, १७, ५ ।

† 'आदित्यरश्मयो धेनवः'—इति वि० ।

‡ 'विप्राः—ब्राह्मणाः . . . अथवा विप्रा आदित्यरश्मयः'—इति वि० ।

¶ 'मतिभिः—प्रज्ञाभिः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



च्छति *। तथा "त्रिष्टुभः" त्रिष्टुब्रूपाः † "अर्काः" अस्माभिः क्रियमाणा एते मन्त्राः "सोमे" "सन्नवन्ते" सङ्गच्छन्ते ॥

"सोमस्सुतऋच्यतेपूयमानः"—इति छन्दोगाः, "सोमःसुतः पूयतेअज्यमानः"—इति बह्वृचाः ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २ ३
एवानःसोमपरिषिच्यमान
१ २ ३ १ २ ३ २
आपवस्वपूयमानःस्वस्ति ।
२ ३ १ २ ३ १र २र
इन्द्रमाविशबृहतामदेन
३२ ३ १ २ ३ २३ १ २
वर्द्धयावाचञ्जनयापुरन्धिम् ॥ ३‡ ॥ १०

हे "सोम!" "परिषिच्यमानः" परितः पात्रेषु सिच्यमानः पूयमानः त्वं "नः॰एवा" अस्माकमेव "स्वस्ति" ¶ अविनाशम् आ पवस्व प्रापय । किञ्च "बृहता" महता "मदेन" मदकर-रसेन अहम् "इन्द्रम्" "आविश" प्रविश । तथा "वर्द्धया" "वाचं" स्तुति-लक्षणां § प्रसिद्धां कुरु । किञ्च

---

* 'ऋच्छते—ऋच् गतौ । गच्छति'—इति वि० ।

† 'त्रिष्टुप्छन्दस्काः अथवा त्रिष्टुभः त्रयीं विद्यां स्तोभयन्तः'—इति वि० ।

‡ ऋ० वे० ७, ४, १८, १ । "रवेण"—इति च तत्र पाठः ।

¶ 'स्वस्ति—क्षेमं कुरु'—इति वि० ।

§ 'वाचम्—ऋग्यजुःसामलक्षणम्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ३२ २५ २१र र ३२ ४
रार। तिमा३मावा। पुह्लणिबभ्रोनिचर। तिमा३मा

४ १ १र १ १ २ १ ५
वा। पारिधीन्। आ। औ३हो। तितो२३४वा।

४ ५ ५ ४ऽ ५ ४र ५
आ५यिहोई३हायि ॥(१) परिधा३यि२रातिता२इहायि।

१ १र ३२ ४ ५ २१प
पारी२। धी२रतिता३२। आयिहायि। तवाह्ल

१ ३२ ४ ५ २१र र
क्षमुता२३सोर। मता३यिदायिवा। तवाहनक्षमुतसो।

३१ ४ ५ १र१ १ २ २ १
मता३यिदायिवा। दूहानः। बा। औ३हो। भ्रभो

५ ५ ५ ५र२ ४५४र ५
२३४वा। धा५नोई३हायि ॥(२) दुहानो३बभ्रऊधनायि।

१ १र ३१ ४५ २१र
दूहा२। नोबभ्रऊ३। धानायि। घृणातपन्तमता२३

१ ३० ४५ २१र र ३२ ४५
यिसूर। ारा:। घृणातपन्तिसू। रिया३पारा:।

१ २र २ २ १ ५ ४
शाकुना:। आ। औ३हो। वपो२३४वा। प्रा५यिमो

५
ई३हायि(३) ॥ १७ ॥ [११]

---

* ऊ० गा० १९प्र० २ख० १७गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ४र ३ ४र ५ र २

॥ द्विनिधनमायास्यम् ॥ तवाह॒ᳪसोमरारण । ए३ ।

२ ४ १ २ १ ३ २

औऽहोऽ५वाऽऽ । माख्याइयि । इन्दो२ । दिवा२३४५यि ।

२ १ १११ ११ १र ११ २१

दा३यिवा२३४५यि । पूरूणिवा । भोनिचरा । तायि

२ १ २ ४ ५ २१ २ २

मा३षा । औ२हो३ । आ२३४वा । पराओ ३ हो ।

१ ३२ २ १११११

धायिᳪरा२ । तिताᳪ३४५ । आ३यिहा२३४५यि ॥(१)

४ ३र ४ ३र ४ ५ २ २ ४ १ ०

परिधीᳪरतितामृद्धि । ए३ । औ३हो५वाऽऽ । पारी

१र २१ २ ११११

३ । धीᳪरा२ । तिताᳪ३४५ । आ३यिहा२३४५यि ।

१र२१ २१ २ २ १ ४

ताषाहन्ना । क्तामुतसो । माता३आ । औ२हो३ ।

५ २१ २ २ १ २२

हो२३४वा । दुहाऔ२हो । नोबा२ । भ्रजु ३ ४ ५ ।

२ १११११ ४र ३र४ ३र४५ २ २

धा३ना२३४५यि ॥(२) दुहानोबभ्रऊधनि । ए३ । औ३

४ १२ १र ३१ २

हो५वाऽऽ । दूहा३ । नोबा२ । भ्रऊ२३४५यि । धा

र२१ २१ २ १ २४

र्णतपा । तामतिमू । राया३आ । औ३हो३ । पा





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३४राः । अकूऔ३हो । नाआरेयि । वपा३४५ । आ
३यिमा२३४५(३) ॥ १८* ॥ [१२]

॥ पृश्नि ॥ तवाहा२३ꣳसोमरारणहाउ । सख्यइन्दो
दिवेदिवे । पुरूणा१यिबा२३ । होवा३हा । भ्रोनिचर । ति
मामा१वा२३ । होवा३हायि । परायिधा१यिꣳरा२३ ।
होवा३हायि । तायिताꣳइहि । इडा२३भा३४३ । ओ
२३४५ई । डा(१) ॥ १ † ॥ [१३]

॥ अर्कपुष्पाद्यम् ॥ तवाहꣳसोमरारण । ऊवे२३ ।
सख्यइन्दोदिवेदिवे । ऊवे२३ । पुरूणिबभ्रोनिचरन्ति
मामव । ऊवे२३ । परिधीꣳरतिताꣳइहि । ऊवे२३ ॥(१)
परिधीꣳरतिताꣳइहि । ऊवे२३ । परिधीꣳरतिताꣳइ
हि । ऊवे२३ । तवाहनक्तमुतसोमतेदिवा । ऊवे२३ ।

---

* ऊ० गा० १६प्र० २ख० १८सा० । † ऊ० गा० १९प्र० २ख० १सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १र २ १र१ १ १ र १र १ १र१
दुहानोबभ्रऊधनि । ऊवेर३ ॥(२) दुहानोबभ्रऊधनि ।
१ २ र १र २१र२ १ २१र २ १ १
ऊवेर३ । दुहानोबभ्रऊधनि । ऊवेर३ । घृणातपन्तमति
१र २ १ २ १र २ १
सूर्य्यम्परः । ऊवेर३ । प्रभुनाद्दवपन्निम । ऊवेर३ ।
१ १ २ १ २ ५र र २ १र
ऊवेर३ । होवा३हा३ । हा३४ । औहोवा । अर्क्की
र र १र ३ १ १ १ १
देवाना२म् । परमेवियो२मा२३४५न्(३) ॥ १४ * ॥[१४]

१ २र १ २र १र
॥ बार्हदुक्थयम् ॥ तवाहं सोम । रा२रण । सख्य
र २ १र २ १ २ १ ७
इन्दोदिवेदा२३यिवा२यि । पूरू१णायिबा२ । भोनिचरा
१र २ १र
२ । तिमामवा । परिधा२३यिं रा । तिताम्आ२३यि
२ २ १र २ १
हा३४३यि ॥(१) परिधीं रति । ता२ इ हायि । परि
र २ १र २ १ २ १ ७
धीं रतिताम्आ२३यिहायि । तावा१हान्ना२ । कामु
१र र २ १र २
तासो२ । मतेदिवा । दुहानो२३वा । भ्रऊधा२३ना
२ र १र२र १ र र
३४३यि ॥(२) दुहानोबभ्रो । ऊ२धनायि । दुहानोब

* ऊ० गा० २० प्र० १ ख० १४ सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २ १ २ १ ७
भ्रूऊधा २ ३ नायि। घार्णा१तापा २। तामतायिसू २।
१ २ १ २ २
रियम्परा:। भ्रकुना२३आयि। वपप्ना२३यिमाँ३४३। औ
२३४५ई। डा(३)॥ १५ *॥ [१५]

२ र र र १ १ १ २र
॥ माण्डवम्॥ तवाह्ंसोमरारणा। सख्यइन्दो
१र २र १ २ १ २ १ २
दिवेदिवे। पुरूणा१यिबा २। भ्रोनिचर। तिमामा१बा
१ २ १र २ ५र
२। परिधार३यिंरा। नितान्। आरयिहार३४औ
र २ र र १ २ १र २
होवा॥(१) परिधींरतिनांआयिहायि। परिधींरति
१र २ १ २ १ २ र १ २
तांइहि। तवाहा१न्ना २। क्नामुतसो। मतायिहा
१र २ १र ३ ५र र
१यिवा २। दुहानो२३वा। भ्रूऊ। धारना२३४औहो
२ र र र १ २ र १र २ १र२
वा॥(२) दुहानोबभ्रूऊधानायि। दुहानोबभ्रूऊधमि।
१ २ १ २र १ २ १
घृणाता१पा २। तामतिसू। रियाम्पा१रा २:। भ्रकुना

* ऊ० गा० २प्र० १ख० १५ सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२　　　१　　　३　५र र　　२ र १ ३
२३आयि । वप । प्रारयिमार२३४औहोवा । विदावसू

१ १ १ १
२३४५(३) ॥ १६ * ॥ [१६] ११

अथ तृतीय-तृचे—

प्रथमा ।

३　१　२　　३ २उ ३ १ २ १ २
पुनानो अक्रमीदभि विश्वामृधोविचर्षणिः ।

३ २ ३ १ २ ३　१ २
शुम्भन्तिविप्रन्धीतिभिः ॥ १ † ॥

"पुनानः" पूयमानः "विचर्षणिः" विद्रष्टा सोमः "विश्वा" सर्वान् "मृधः" हिंसकान् शत्रून् "अभि अक्रमीत्" अतिक्रान्तवान्, तं "विप्रं" मेधाविनं "धीतिभिः" कर्मभिरभिषवादिभिः स्तुतिभिर्वा "शुम्भन्ति" दीपयन्ति अलङ्कुर्वन्ति ॥ १ ॥

अथ द्वितीया ।

१　२र　२ १ १ २ २ ३ २ ३ १ २ ३ २
आयोनिमरुणोरुहद्गमदिन्द्रोवृषासुतम ।

३ १　२र
ध्रुवेसदसिसीदतु ॥ २ ‡ ॥

अयम् "अरुणः" अरुणवर्णः सोमः "योनिं" स्थानं द्रोणकलशम् "आरुहत्" आरोहति, ततो "वृषा" कामानां वर्षकः

---

* ऊ० गा० २०प्र० १अ० १६ सा० ।

† छ० आ० ६ १, १, २ ( २ भा० ५४ पृ० ) = ऋ० वे० ६, ८, ३०, १ ।

‡ ऋ० वे० ६, ८, ३०, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"इन्द्रः" "सुतम्" अभिषुतं सोमं "गमद्" गच्छति, गत्वा "ध्रुवे सदसि" स्थिरे स्थाने द्युलोकाख्ये "सीदति"* निवसति ॥

"इन्द्रोवृषासुतम्"-"इन्द्रं वृषासुतः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ ३ १ २ ३ १ १ २ १ १

नूनोरयिम्महामिन्दोस्मभ्य्ँसोमविश्वतः ।

१ १ ३ १ २

आपवस्वसहस्रिणम् ॥ ३ † ॥ १२

हे "सोम !" अभिषुतस्त्वं हे "इन्दो !" "नः" अस्मभ्यम् "नु" क्षिप्रं "महां" महान्तं "सहस्रिणम्"‡ असङ्ख्यातं "रयिं" धनं "विश्वतः" "आ पवस्व" सर्वतः परिस्रव ॥ ३ ॥ १२

३ २ २ २

॥ सत्रासाहीयम् ॥ पुना ३ ४ । नोअक्रमीदभि ।

५ ५ १ २ २ १ १

ओ६वा । विश्वाम्टधोविचर्षा २णायिः । प्रू२भ्मा । ता

२ १ ऽ २२ ३२ २ १ ५

२३यिवौ । प्रन्धौ३हो । वाहा३४३यि । ता२३४यिमो६

५ ३२ १ २ ५ ५ १

हायि ॥(१) आयो३४ । निमरुणोरुहत् । ओ६वा । गम

२ २ १ १ २ १ ऽ

दिन्द्रोवृषासू२ताम् । ध्रू२वे । सा२३दा । सिसौ ३

* "सीदति"—इति ऋग्वेदीय पाठः, मूलपाठस्तु "सीदतु"—इति ।

† ऋ० वे० ९, ८, ३०, ३ ।

‡ 'सहस्रिण सहस्रसङ्ख्यातम'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र ३र २ १ ५ ३र २
द्दो। वाहा३४३यि। दा२३४तो६ द्दायि॥(२) नूनो३४।
र ५ ५ १ र
३४। रयिम्महामिन्द। ओ६वा। अस्मभ्य९सोमविश्वा
१ १ २ १ ऽ २र ३र २
२ताः। आ२पा। वा२३स्वा। सहौ३हो। वाहा३
१ ५ ५
४३यि। स्वा२३४यिणो६ हायि(३)॥ १२ *॥ [१]

१ ०र ३ २ ३ ५ १
॥ यामम्॥ पुनानोआ२। क्रमीदा२३४भी। वि
र ३ २ १ ५ १
श्वाम्टधो२। विचर्षा२३४णायिः। शुभ्मतिवा२३यि। प्र
२ ४ १र ० ३ २ ३
न्धा३यितापूयिभा६५६यिः॥(१) आयोनिमा२। रुणो
५ १ ३ २ ३ ५ १र
२३४हात्। गमदिन्द्रो२। वृषासू२३४ताम्। ध्रुवेस
२ ४ १र ०
दा२३। सिसा३यिदापूता६५६उ॥(२) नूनोरया२यि
१ २ ३ ५ १ १ २ ३
म्। महामा२३४यिन्दो। अस्मभ्य९सो२। मविश्वा२३
५ १र २ ४
४ताः। आपवस्वा २ ३। सहा ३ स्वा ५ यि णा ६ ५
६ म्(३)॥ ११॥ [२]

---

* ऊ० गा० २प्र० १ख० १२सा०। † ऊ० गा० २२प्र० २ख० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ र ३र ४ ३र ४ ५ ३र २ ४
॥ यामोत्तरम् ॥ पुनानोअक्रमीदभि। औहा३ओ
५ ३ ४र र ३ ४ ५ ३र २ ४ ५ २ १
हा। विश्वामृधोविचर्षणिः। औहा३ओहा। शुम्भ
१ ३ २ ४ ३र ४र
ता२३यिवि। प्रन्धा३यितापयिभा६५६यिः ॥(१) आयो
३ ४ ३र ४ ५ ३र २ ४ ५ ३ ४ ३ ४र ३र ४ ५
निमरुणोरुहत्। औहा३ओहा। गमदिन्द्रोवृषासुतम्।
३र २ ४ ५ २ १र २ ३ २ ४
औहा३ओहा। ध्रुवेसा२३दे। सिसा३यिदा५ता६५
३र ४र ३ ४ ३र ४ ५ ३र २ ४ ५ ३
६उ ॥(२) नूनोरयिंमहामिन्द। औहा३ओहा। अस्म
र ३ ४ ५ ३र २ ४ ५ २र १ २
भ्यꣳसोमविश्वतः। औहा३ओहा। आपावा २ ३ स्व।
२ १ ४
सहा३स्ना५यिणा६५६म् ३) ॥ १२ * ॥ [३]

२र र १ १ २
॥ गौराङ्गिरसस्य साम ॥ आहायिहू३वा२३यि। ऊव
२ र र ४ २र ३ ५ ३ र २ १ ५
ए। पुनानोआ३क्रा३मीदभि। विश्वामृधो३चर्षणिः।
२ ३ २ ४ १र र
शुम्भतिवि। प्रन्धा३यितापयिभा६५६यिः ॥(१) आयो
४ २र २ ५ २ ४ २र ३ ५ २ र
निमा३रू३णोरुहत्। गमदिन्द्रो३वा३र्षासुतम्। ध्रुवे

* ऊ० गा० १२प्र० २ख० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सद। सिसा३यिदापुता६३६उ ॥(२) नूनोरया३यिमा३
हामिन्द्रो। अस्मभ्यᳬसो३मा३विश्वतः। ओहोयि। हू
३वा२३यि। ऊवए। आपवस्व। सहा३स्रा५यिणा६५
६म्(३) ॥ १२ * ॥ [४] १२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
चतुर्थ खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡ प्रथमतृचे—
प्रथमा ।

पिबा सोममिन्द्र मन्दतु त्वा यन्ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्याᳬ सुयतो नार्वा ॥ १ ¶ ॥

हे "इन्द्र!" "सोमं" "पिब", स सोमः "त्वा" त्वाम् "मन्दतु" मादयतु, हे "हर्यश्व" हरिसञ्ज्ञकाश्ववन्! इन्द्र!

---

* ऊ० गा० १३प्र० २० १३सा ० ।
'उक्तो माध्यन्दिनः पवमानः'—इति वि० ।
‡ 'इदानीं पृष्ठान्युच्यन्ते विराजं पृष्ठं भवति। तत्राग्निमन्थनम् ॥'—इतिवि० ।
¶ ऋ० आ० ५, १, १, ८ (१भा० ८१४ पृ० ) = ऋ० वे० ५, ४, ५, १ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ते" त्वदर्थं "सोतुः" अभिषवकर्त्तुः "बाहुभ्याम्" "अर्वा" रश्मिभ्यामश्वइव "सुयतः" सुष्ठु परिगृहीतः "अद्रिः" ग्रावा "यं" सोमं "सुषाय" अभिषवं करोषि, स मन्दत्विति पूर्वेण सम्बन्धः ॥ १ ॥

अथ द्वितीया।

२ ३ २ १ २ ३ २ ३ १ ३ १ २ ३ १ २ ३ १ २

यस्तेमदोयुज्यश्चारुरस्तियेनवृत्राणिहर्यश्वहꣳसि।

१र २र

सत्वामिन्द्रप्रभूवसोममत्तु ॥ २ * ॥

हे "हर्यश्व !" "इन्द्र !" "ते" तव "युज्यः" योग्यः "चारुः" समीचीनः "मदः" मदकरः "यः" सोमः "अस्ति" विद्यते "येन" च पीतेन सोमेन "वृत्राणि" आवरकादीनि राक्षसादीनि "हंसि", हे "प्रभूवसो" प्रभूतधन इन्द्र ! "त्वा" त्वां "सः" सोमः "मदतु" मादयतु ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ १ २उ ३ १ २ १ १ २ ३

बोधासुमेमघवन्वाचमेमांयान्तेवसिष्ठोअर्चतिप्रशस्तिम्।

३ १र २र ३ १ २

इमाब्रह्मसधमादेजुषस्व ॥ ३ † ॥ १३

हे "मघवन्" इन्द्र ! "त" तव "प्रशस्तिं" स्तुतिरूपां "यां" वाचं "वसिष्ठः" नामर्षिः "अर्चति" वहति, "इमां" वसिष्ठस्य

---

* ऋ० वे० ५, ३, ५, १। † ऋ० वे० ५, ३, ५, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सम्बन्धिनीं वाचं "सु आ बोध" सुष्ठु अभिबुध्यस्व किञ्च "इमा" इमानि "ब्रह्म" ब्रह्माणि स्तवोरूपाण्यन्नानि * "सधमादे" यज्ञे "जुषस्व" सेवस्व ॥ ३ ॥ १३

॥ दैर्घतमसम् ॥ हाउपिबा। सोममिन्द्र। मा।
दतुत्वा। यन्तेसुषावहरिया। श्वा१द्री२ः। श्वाद्री२ः।
सोतुर्बाहुभ्याम्। सुयता३ः। सुयताः। ना२र्वा२ ३
४औहोवा॥(१) हाउयास्तायि। माटोयुजियः। चा।
रुरस्ता३यि। रुरस्तायि। येनवृत्राणिहर्य्यश्वा। हा१
९सा२यि। हा१९सा२यि। सत्वामिन्द्रा। प्रभूवसा३
उ। भूवसा३उ। ममा२त्तू२३४औहोवा॥(२) हाउबो
धा। सूमेमघवन्। वा। चमेमा३म्। चमेमा३म्।
यान्तेवसिष्ठअर्चतिप्रा। शा१स्ता२यिम। शास्ता

---

* 'अथवा ब्रह्माणि चैवियल्लक्षणानि'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२यिम। इमाब्रह्मा। सधमादा३यि। धमादा३ब्भिः। जुषा२स्वा२३४औहोवा(३) ॥ १ * ॥ [१]

॥ मरायम् ॥ ह्वाउहाउहाउ। पायिबा। सोमाम्। इन्द्र। मन्दतुवा। त्वा। त्वा। यान्तायि। सुषा। वहर्य्यस्वाद्रिः। द्रिः। द्रिः। सोतुः। बाहू। भ्या२सुयतोनार्वा। र्वा। र्वा ॥(१) यास्तायि। मदो। युजियस्वाहरस्ति। स्ति। स्ति। यायिना। वृत्रा। णिहर्य्यस्वहर्सि। सि। सि। सात्वाम्। इन्द्रा। भूमवसोममत्तु। तु तु ॥(२) बोधा। सुमायि। मघवन्। बाचमेमाम्। माम्। माम्। यान्तायि। वसायि। ष्ठोप्रशंतिप्रशस्तिम्। स्तिम्। स्तिम्। अयिमा। ब्रह्मा। सधमा। देजुषस्व। स्व। स्व(३) ॥ २ † ॥ [२] १३

* ऊ० गा० २२प्र० २ श० १गा०। † ऊ० गा० २१प्र० २श० ३गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीयखण्डे—*प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २
विश्वाःपृतनाअभिभूतरन्नरः

३ १ २ ३ २ ३ १ २ ३ १ २
सजूस्ततक्षुरिन्द्रञ्जजनुश्चराजसे।

२ ३ १ २ ३ २ ३ १ २ ३ १
क्रत्वेवरेस्थेमन्यामुरीमुतोग्र

२र ३ १ २ ३ १ २
मोजिष्ठन्तरसन्तरस्विनम्॥ १ †॥

"विश्वाः" सर्वाः व्याप्ता वा "पृतनाः" [ पृङ् व्यायामे (तु०, आ० ); व्याप्रियन्ते इति पृतनाः ] सेनाः परस्परं सङ्गताः सत्यः "अभिभूतरम्" [शत्रूणामित्यर्थः] अभिभवितारम् "इन्द्रम्" "ततक्षुः" आयुधादिभिः तीक्ष्णीचक्रुः आयुधवन्तम-श्ववन्तञ्च चक्रुरित्यर्थः [ यद्वा पृतना इति सङ्ग्राम नाम (निघ० २, १७, १८ ); व्याप्रियन्ते अत्रेति पृतनाः सङ्ग्रामाः, सर्वानेव सङ्ग्रामानभिभावुकमिन्द्रं "नरः" नेतारः स्तोतारः अन्योन्यं सङ्गताः स्तुतिभिः तीक्ष्णमकुर्वन्, स्तुतोऽतिबलवान् भवतीति। यद्वा यष्टारो हविः-प्रदानेन वीर्यवन्तं कुर्वन्तीति ] किञ्च स्तोतारः "राजसे" [ राजतेः तुमर्थे असे प्रत्ययः ( ३, ४, ९ ) ] आत्मनो विराजनार्थं प्रकाशनार्थं सूर्यात्मानमिन्द्रं "जजनुः" जनयामासुः स्तोत्र-शस्त्रैः स्व-यज्ञे प्रादुरभावयन्नि-

---

* 'वामदेव्यम्। मैत्रावरुणं साम। विश्वोकं ब्रह्मसाम'—इति वि०।

† छ० आ० ४, २, ४, १, ( १भा० ७५४पृ० ) = ऋ० वे० ६, २, ३७, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



त्यर्थः। किञ्च "कृत्वा" ईदृशमिन्द्रम् "आसुरीम्" शत्रूणामभि-मुख्येन मारयितारम् "उग्रम्" उद्गूर्णबलम् अतएव "ओजिष्ठम्" ओजस्वितमं "तरसं" प्रहर्त्तृ "तरस्विनं" सङ्ग्रामे शत्रुवधार्थं वेगवन्तं बलवन्तं वा एवम्भूतमिन्द्रं धनार्थं स्तुवन्ति॥

'कृत्वेवरेस्थेमनि"-"कृत्वावरिष्ठंवरे"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ ३ ३ १ १२ ३ १र
नेमिन्नमन्तिचक्षसामेषंविप्राअभिस्वरे।

२ १ २ ३ १उ ३ १ २ ३ २ ३ १ १२
सुदीतयोवोअद्रुहोपिकर्णेतरस्विनःसमृक्वभिः॥ २ *॥

"नेमिम्" [ अरान् यथा नेमिर्व्याप्नोति तद्वदिन्द्रं सर्वं व्याप्नुते तादृशं ] नमनशीलमिन्द्रं "चक्षसा" दर्शनमात्रेणैव† "विप्राः" मेधाविनः ‡ "अभिस्वरे" ¶ अभिस्वरेण गीताय स्तोत्राय इन्द्रविषयं स्तोत्रं कर्त्तुमित्यर्थः "नमन्ति" नमस्कुर्वन्ति। कीदृशम्? "मेषम्" इन्द्रो मेषोभूत्वा मेधातिथिं स्वर्गमनयत् तस्मात् मेधातिथेर्मेषभूतमिति यावत्। इदानीं यजमानः स्तोतॄनाह—अपिच हे स्तोतारः! "सुदीतयः" शोभनदीप्तयः

---

* ऋ० वे० ६, १, २८, १।

† 'चक्षुषा दृष्टिसूत्रेण'—इति वि०।

‡ 'विप्राः ब्राह्मणाः'—इति वि०।

¶ 'अभिस्वरे—अभिस्वरो यज्ञस्तस्मिन् अभिस्वरे यज्ञे'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अद्रुहः" कस्याप्यद्रोग्धारः "वः" यूयं [ छान्दसो वसादेशः ] "तरस्विनः" कर्मसु स्तोत्रेषु वा त्वरायुक्ताः सन्तः इन्द्रस्य "कर्णे" श्रोत्र-समीपे "ऋक्वभिः" अर्चनयुक्तैर्मन्त्रैः * [ यद्वा ऋचो बह्वयो येषु सन्ति तैः स्तोत्रादिभिः ] संस्तुतः इन्द्रो यथा युष्मदीयानि स्तोत्रादीनि शृणोति तथा सम्यगभिष्टुतेत्यर्थः ॥

"अभिस्वरे"-"अभिस्वरा"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २   २ ३ ३   १ २   ३ १ २
समु रेभासो अस्वरन्निन्द्रꣳ सोमस्य पीतये ।
२र ३ १ ०  ३ २ ३ १ २ ३ १   २ ३ १ ३ १ २
स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ३ † ॥ १४

"रेभासः" [ रेभृ शब्दे ( भ्वा० आ० ) शब्दयितारः स्तोतारः [ यद्वा, "रेभासः" कश्यप-पुत्रा रेभाः एतन्नामका ऋषयः ] "इन्द्रम् उ" इन्द्रमेव "समस्वरन्" ‡ सम्यगशब्दयन् समस्तुवन् । किमर्थम् ? "सोमस्य पीतये" सोमपानाय "यद्" यदा "स्वष्पतिः" स्वर्गस्य पालयिता धनस्य स्वामी वा इन्द्रः "वृधे" यजमानादिवर्द्धनाय भवति, तदा "धृतव्रतः" धृत-कर्मेन्द्रः

---

* 'ऋक्वभिः—ऋग्यजुःसामभिः'—इति वि० ।

† ऋ० वे० ८, ९, ३८, १ । "यदीम्"—इति च ऋ०-पाठ ।

‡ 'समस्वरन्—सामभिर्गायन्ति'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ओजसा" बलेन "ऊतिभिः" मरुद्भिः पालनैर्वा सह सङ्गच्छते ; स्तुतिभिर्बलं मरुद्भिः पालनैश्चेन्द्रस्य भवतीत्यर्थः* ॥

"समु"-"समीम्"—इति पाठौ, "स्वर्पतिः"-"स्वर्पतिम्"—इति च ॥ ३ ॥ १४

२ १ २र १२ १ ३ २
॥ त्रैशोकम् ॥ विश्वाहायि। पृतनाअभिभू। तरन्न

१ २ १र २ १ १ १ २ र १ ५
राः। सजूस्ततक्षुरायिन्द्रञ्जजनूः। चराजासो२३४हा

२ १र २ २र र ३ ५
यि। क्रत्वौहोयि। वरौहोयि। स्थेमन्यार्मृ२३४रीम्।

२ १ २ १ ५ २ ३ ५ १
उतोहायि। उग्रमो२३४जो। ष्ठन्तारा२३४साम्। हो

३ १ ५ ५ २र १
यि। तरा३४। स्विमम्। ओ२३४वा ॥(१) नेमोहायि।

२ ३ २ १ २र १ २र र ५
नाम। तिचक्षसा। मेषंविप्राः। अभिस्वारो२३४हा

१र र ३ ५ २
यि। सौहोयि। दौहोयि। तयोरवो२३४आ। द्रु

१ २ १ ५ २ ३ ५ २
होहायि। अपायिका२३४र्णो। तारस्वो२३४नाः। हो

३ १ ५ ५ २ १
यि। समृ३४। कभिः। ओ२३४वा ॥(२) समोहायि।

---

* अत्र 'सम् उ—इति पदपूरणः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २र ३ १ १ १ १र १ र १

रायिभ्.. क्षोऽअस्वरान्। इन्द्र९सोम। स्वपीतायो२३

५ १र र ३ ५

४च्चायि। सोवोयि। वौवोयि। पतार्‌यिर्य्यार्२३४दौ।

२ १ २ १ ५ १ ३ ५ २

वृधीवायि। धृतन्ना२३४ताः। ह्रियोजा२३४सा। वो

१ २ ५ ५ २ १

यि। समू३४। तिभिः। औ२ह्वा। औयिदौ २ ३ ४

५

वा (३)॥ १२ *॥ [१] १४

अथ प्रगाथरूपे तृतीयसूक्ते †—

प्रथमा।

१ २र ३ २उ ३ १ १ ३ १ २

योराजाचर्षणीनांयातारथेभिरध्रिगुः।

१ २ ३ १ २र ३ र ३ १ २ ३ १ ३ २

विश्वासान्तरुतापृतनानाञ्ज्येष्ठंयोवृत्रहागृणे॥ १ ‡॥

"यः" इन्द्रः "चर्षणीनां मनुष्याणां "राजा" स्वामी, "रथेभिः" रथैः "याता" आगन्ता च, "अध्रिगुः" अधृतगमनो ऽन्यैः, "विश्वासां" "पृतनानां" सेनानां "तरुता" तारकः, "यः" च "वृत्रहा" वृत्रं हतवान्, "ज्येष्ठं" गुणैर्ज्यायांसं तं महाभागमिन्द्रं "गृणे" स्तौमि॥ १॥

* ऊ० गा० १३प्र० २ख० १३सा०।

† 'भरद्वाजस्य पृश्न्याख्यावाकं साम'—इति वि०।

‡ छ० आ० ३, २, ४, १ (१ भा० ५६३ पृ०) = ऋ० वे० ६, ५, ८, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३१ १ २ १ २

इन्द्रन्त॑ᳪशुम्भपुरुहन्मन्नवसेयस्यद्विताविधर्त्तरि ।

१ २ ३ १ २ ३ २ २ ३ २ ३ २ ३ १ २८

हस्तेनवज्रःप्रतिधायिदर्शतोमहान्देवोनसूर्य्यः॥ २* ॥ १५

हे "पुरुहन्मन्" ऋषे ! † त्वं "तम्" "इन्द्रं" "शुम्भ" ‡ हविःप्रदानादिना अलङ्कुरु । किमर्थम् ? "अवसे" रक्षणाय ¶ । एवमात्मा स्वात्मानं सम्बोध्य ब्रवीति—"यस्य" तव "विधर्त्तरि" विधारके इन्द्रे "द्विता" § द्वित्वम् अस्ति,—औग्र्यमनौग्र्यम् [तव शत्रून् हन्तुमुग्रत्वं, तदनुग्रहाय अनुग्रहेति द्वैतमस्ति ]; तचौग्र्यं दर्शयति—"दर्शतः" दर्शनीयः "महान्" प्रभूतः "वज्रः" "देवो न सूर्य्यः" द्योतमानः सूर्य्य इव स्थितः, "हस्तेन" करेण "प्रति धायि" प्रतिनिहितो भवति ‖ ॥

---

* ऋ० वे० ६, ५, ८, २ ।

† पुरुहन्मन्—पुरुहन्मा नामऋषिः अस्य तृचस्य सञ्ज्ञानं परोक्षत्वं ब्रवीति'—इति वि० ।

‡ 'शुम्भ—शुम्भं बलवन्तम्'—इति वि० ।

¶ 'सुहोति वाक्यशेषः'—इति वि० ।

§ 'त्रितः, द्वितः, एकतः—इति ऋषयः ; तेषां मध्ये द्विताः'—इति वि० ।

‖ 'हस्तेन वज्रः प्रतिधायि—हस्तेन स्थितोला वज्रः प्रति धेट् पाने सर्वप्राणिनां वीर्यं रसं शोणितादि पिबते'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हस्तेन"-"हस्ताय"—इति पाठौ, "महान्देव"--"महोदेवः"
—इति च *॥ २ ॥ १५

२र १ ४ र र ५ १र २र १ र
॥ पृश्नि ॥ योराजा२३चर्षणीनाꣳहाउ। यातारथे
२ १ २ १ २ १ २ २ १ २र
भिरध्रिगुः। विश्वासा१न्ता२३। होवा३हायि। इता।
१ २ १ २ २ १र २
पृताना१ना२३म्। होवा३हायि। ज्येष्ठंयो१वा २३।
१ २ २ १ र र १ २र १ ४
होवा३हा। वाहागृणे। इडा२३॥(१) ज्येष्ठंयो२३वृ
र र ५ १र २ १र २ १र २र १ २
त्रहागृणेहाउ। ज्येष्ठंयोवृत्रहागृणे। इन्द्रान्ता१ꣳष्ठ२
१ २ २ १ २ १ २ १
३। होवा३हा। अपुरुह। न्मन्नावा१सा२३यि। हो
१ २ १ २ १ २ २ १
वा३हायि। यस्याद्दा१यिता२३। होवा३हायि। वायि
२ १ २ १ ४र ५
धर्त्तरि। इडा २ ३॥(२) यस्यद्वी२३ताविधर्त्तरिहाउ।
१ २ १र २ २ २ १ २ १ २ २
यस्यद्विताविधर्त्तरि। हस्तायिना१वा२३। होवा३हा।
१ २ र २ २ १ २ २ १
ज्ञःप्रतिधा। यिदार्शा१मा२३ः। होवा३हायि। महा

* "महोदेव"—इति च स० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



न्दा१यिवा२३:। द्योवा३त्वायि। नासूरियः। इडा २३ भा३४३। ओ२३४५ई। डा(३)॥१४*॥[१]

॥ अभीवर्त्तम्† ॥ येरा३जा३चर्षणीनोवा। यातार थे। भिराध्रा१यिगू २:। वायिश्वासा३१२३४म्। तरुता। पृताना१ना २म्। ज्येष्ठांया१वार। वृत्रहा३। गा२३४ ५। णा२३४५यि॥(१) ज्येष्ठा३यो३ वृत्रहागुणोवा। ज्यायिष्ठयोवृ। वृत्रहा१गा१र्णा २यि। आयिन्द्रन्त०शू३१ २३४। भपुरुष। मन्नावा१सा २यि। यस्यादा१यिता २। विधा३। ता२३४५। रा२३४यि॥(२) यस्या३द्दा३यि ताविधर्त्तरोवा। यास्यद्दिता। विधार्त्ता१रा २यि। हा स्तेनवा३१२३४। ञ:प्रतिधा। यिन्द्रार्या१ता २:। महा

---

* ऊ० गा० २प्र० २ख० १४सा०। † "अभीवर्त्तः"—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



न्द्राश्यिवार्रः। नमूड्। यार्२३४५। यार्२३४५ः (३)

॥ ७ * ॥ [२]

॥ जनित्राद्यम ॥ योराजा३चर्षणायिनाम। ऊवे होऽ२यि। यातारथेभिराधा१यिगूऽ२ः। विश्वासान्तरु तार्२। पृतानार्२३४नाम्। ज्येष्ठा३ऽहोयि। योवा३ ऽहोयि। योवा३हो। त्रहा। गार्२णा २ ३ ४ औहो वा ॥(१) ज्येष्ठंयो ३ वृत्रहागृणायि। ऊवेहोऽ२यि। ज्येष्ठंयोवृत्रहागा १ णाऽ२यि। इन्द्रन्तऽम्नुम्भपुरुहार्२। न्मन्नावार्२३४सायि। यस्या ३ होयि। द्विता ३ होयि। विध। तार्२रार्२३४औहोवा ॥(२) यस्यद्वी३ताविधर्त्तरा यि। ऊवेहोऽ२यि। यस्यद्विताविधार्त्ता१राऽ२यि। हस्ते नवज्रःप्रतिधार्२। यिदार्भार्२३४ताः। महा३न्होयि।

* ऊ० गा० ७प्र० १ख० ७गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२२ १ २१र २ ५र२ २ १ ११
देवा३द्यो । नस् । रा२याँ२३४औहोवा ॥(३) अनिआर२३

११
४५म् ॥ १३ * ॥ [३] १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य

पञ्चमः खण्डः † ॥ ५ ॥

---

अथ षष्ठे खण्डे ‡, प्रथमतृचेण—

प्रथमा ।

१ १ ३ २ ३ २ ३ १ २र ३क २र ३ २
परिप्रियादिवःकविर्वयाꣳसिनप्त्योर्हितः ।

२ १ २ २ १ २
स्वानैर्यातिकविक्रतुः ॥ १ § ॥

"कविः" मेधावी "कविक्रतुः" क्रान्त-प्रज्ञः क्रान्त-कर्मा "नप्त्योः" अधिषवणफलकयोः "हितः" निहितः सोमः "दिवः" द्युलोकस्य "परि प्रिया" अति प्रियाणि "वयांसि" ग्रावाणः ॥

"स्वानैः"-"सुवानः"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १८प्र० २अ० १३सा० । † 'उक्तं माध्यन्दिनं सवनम्'—इति वि० ।
‡ 'इदानीमार्भवमुच्यते'—इति वि० । ¶ 'चौर्णायवं साम'—इति वि० ।
§ छ० आ० ५, २, ४, १० ( २भा० २९ ) = ऋ० वे० ९, ७, ३२, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ २ ३ २३ १ २ ३ १ २ १२
ससूनुर्मातराशुचिर्जातोजातेअरोचयत्।
३ २ ३ १ २ ३ १ २
महान्मही ऋतावृधा॥ २ *॥

"जातः" उत्पन्नः "शुचिः" † दीप्तः महान् हविर्लक्षणः "सः" सोमाख्यः "सूनुः" पुत्रः "मही" महत्यौ "ऋतावृधा" ‡ यज्ञस्य वर्द्धयित्र्यौ "जाते" विश्वस्य जनयित्र्यौ "मातरा" आत्मनो मातरौ द्यावापृथिव्यौ "अरोचयत्" रोचयति दीपयति॥ २॥

अथ तृतीया।

२ ३१ २ ३१ २ ३ १ २ ३ १ २ ३ १ २
प्रप्रक्षयायपन्यसेजनायजुष्टोअद्रुहः।
३ क २र ३ १ २
वीत्यर्षपनिष्टये॥ ३ ¶॥ १६

हे सोम! "प्र प्र" अत्यन्तं "क्षयाय" तव निवास-भूताय "अद्रुहः" अद्रुहे अद्रोग्ध्रे "पन्यसे" स्तोत्रे "जनाय" मनुष्याय

---

* ऋ० वे० ६, ७, १२, २। † 'शुचिः दीप्तः'—इति वि०।

‡ 'ऋतावृधा—ऋतो यज्ञः तेन वर्द्धतः ऋतावृधौ अथवा ऋतमन्नं तेन वर्द्धते'—इति वि०।

¶ ऋ० वे० ६, ७, १२, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वोति" वीत्यै भक्षणाय "जुष्टः" पर्याप्तः त्वं "पनिष्टये"* स्तुतये "अर्षे" अङ्गं प्रति गच्छ ॥

"अद्रुहः"-"अद्रुहे"—इति पाठौ, "पनिष्टये"-"च न--ष्टया"—इति च ॥ ३ ॥ १६

॥ और्णायवोत्तरम् ॥ परिप्रिया२दिवःकवायिः। वया२हो१वा॥सिनप्त्रोवोर्ह्हिताः। स्वानैर्य्या२३ती। ऊवा। होवा। होवा। ऊवा२यि। ई३र्या। कविक्रतो२। या२३४औहोवा ॥(१) समूनुर्म्मा२तरापुचायिः। जाता२हो१वाजातेअरोवोचयात्। महान्मा२३ही। ऊवा। होवा। २। ऊवा२यि। ई३र्या। ऋतावृधो२। या२३४औहोवा ॥(२) प्रप्रक्षया२यपन्यमायि। जना२हो१वायजुष्टोवोअद्रुहाः। वीतिया२३र्षा। ऊवा। होवा।

* 'पनतिः स्तुतिकर्म्मा (निघ० ३, १४, १६),—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ऽ २ ३ २ १ २ ५र र
२। ऊवा २यि। ई३र्यां। पनिष्टयोर। या२३४औहो
२ १११११
वा। ई३या२३४५म्(३) ॥ १५ * ॥ [१]

२ र १ २ १ र
॥ और्णायवाद्यम् ॥ परिप्रियादिवःकावीः। वयाꣳ
र र र २ १ १
सिनप्त्रोर्हिताः। स्वानैर्य्या२३ती। आया२। इया
ऽ र ३ २१ ३ ५र र २र
२ई३या। कविक्रतोर। या२३४औहोवा ॥(१) सस्तु नु
र र१ २ १र र र र र र
म्मातराष्ट्रचीः। जातोजातेअरोचयात्। महान्मा २ ३
२ १ १ ऽ २ ३ र २१ ३
ही। आया२। इया २ई३या। ऋतावृधोर। यार
५र र २ र १ २ १ २ र
३४औहोवा ॥(२) प्रप्रक्षयायपन्यासायि। जनायजुष्टो
१र २ १ १ ऽ २
अद्र हाः। वीतियार३र्षा। आया२। इया२ई३याँ।
३ २१ ३ ५र र २ १११११
पनिष्टयोर। यार३४औहोवा। ई२३४५(३) ॥८ † ॥[२]

२ १
॥ बृहद्भारद्वाजम् ॥ परिप्रिया। दिवःकवायिः।
र २ १र र र २
वयाꣳसार३यिना। प्रियोर्हिताः। स्वानैर्या२३तायि।

* ऊ० गा० २प्र० २अ० १५सा०। † ऊ० गा० ७प्र० २अ० ८सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ र २ १ २ १ २र
आ। औ३होवा। काविक्रतुः। इडा२३॥(१) समूनु

१र र र २ १र
र्म्मा। तरापूचायिः। जातोजार२३ते। अरोचयात्।

र २ १ २ र२ १ र २ १
मयान्मा२३ही। आ। औ३होवा। आर्त्तावृध। इडा२

२ १ र २ र
३॥(२) प्रप्रक्षया। यपन्यसायि। जनाया२३जू। ष्टो

१ र २ १ २ र२ १
अद्रुत्वाः। वीतिया२३र्षा। आ। औ३होवा। पानि

२र १ २ १
ष्टये। इडा२३भा३४३। ओ२३४५ई। डा(३)॥ १० *॥[३]

१ ११र २१र र २
॥ गौषूक्तम्॥ परिप्रियादिवौ। हौहोवाहायि।

१ र २ १
कवायिः। वयाꣳसिनप्रियौ२। ऊवायि। ऊवा२यि।

१ १र र र १
हायिता२ः। स्वानैर्य्यातिकवौ२। ऊवायि। ऊवा२

१ १ २ ५र र २१र२२
यि। क्रातू२३ः। हो२वा२३४औहोवा। अग्निराऊता

२३४५ः(१)॥ ११ †॥[४]

२ र २
॥ ईनिधनम्भागीयवम्॥ परिप्रियादिवःकवा३यिरे।

---

* ऊ० गा० १५प्र० २ख० १०सा०। † ऊ० गा० १६प्र० १ख० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र र र र २
वयाꣳसिनप्तयोर्हिताः। स्वानैर्ध्या२३तायि। ऐ२हो१आ
१ १ ३ ५र र १ र
२३यिही। कवि। क्रा२त्व२३४औहोवा॥(१) ससूनु
र र २ १ र र र र र
र्मातराशुचा३ए। जातोजातेअरोचयात्। महान्मा२३
२ २ १र ३ ५र र
ही। ऐ२हो१आ२३यिही। ऋता। वा२ह्वा२३४औहो
१ र २ १र र
वा॥(१) प्रप्रक्षयायपन्यसा ३ ए। जनायजुष्टोअद्रुहः।
र २ २ १ ३
वीतिया२३र्षा। ऐ२हो१आ२३यिही। पनि। ष्टा२या
५र र ३१११११
२३४औहोवा। ई२३४५(३)॥ १७ *॥ [५] १६

अथ प्रगाथे द्वितीयसूक्तं †—

प्रथमा ।

२ ३ १२३१२ ३१२ ३१२
त्वꣳह्या३ङ्गदैव्यपवमानजनिमानिद्युमत्तमः।
२ १२३१२
अमृतत्वायघोषयन्॥ १ ‡॥

हे "पवमान" पूयमान ! "दैव्य" देवसम्बन्धि सोम ! "द्युम-

---

* ऊ० गा० २०प्र० १ख० १७सा० ।

† 'वामदेव्यं बृहत्कं साम'—इति वि० ।

‡ छ० आ० ६, २, ४, ६ ( २ भा० २३५ पृ० ) = ऋ० वे० ७, ५, १०, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



त्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "अङ्ग" क्षिप्रं "घोषयन्" शब्दयन् शब्दं कुर्वन् "जनिमानि" देवसम्बन्धीनि जन्मान्यभिलक्ष्य "अमृतत्वाय" अमरणाय आगच्छेति शेषः ॥

"दैव्य"-"दैव्या"—इति पाठौ, "घोषयन्"-"घोषः"—इति च ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २
येनानवग्वादध्यङ्ङपोर्नुं*तेयेनविप्रासआपिरे ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
देवानाꣳसुम्ने अमृतस्यचारुणोयेनश्रवाꣳस्याशत ॥२†॥१७

"नवग्वा"‡ नवनीय-गतिः यद्वा नवभिर्मासैः सत्रस्यानुष्ठानात् "दध्यङ्"—एतन्नामकः अङ्गिराः "येन" सोमेन पणिभिरपहृतानां "द्वारम्" "अपोर्णुते" अपच्छादयति विवृतमकार्षीत् "विप्रासः" तत् मुख्याः सर्वे मेधाविनोऽङ्गिरसः "येन" च सोमेन "आपिरे" तैरपहृता गाः आप्नुवन् किञ्च "देवानाम्" इन्द्रादीनां "सुम्ने" सुखे यत्नेन सञ्जाते सति "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य सम्बन्धीनि "श्रवांसि" अन्नानि

* "र्णुं"—इति क० पु० पाठः । † ऋ० वे० ७, ५, १७, २ ।
‡ 'नवग्वा—नवा गावो यस्य असौ नवग्वा'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"येन" च सोमेन यजमानाः "आयत" व्याप्नुवत् अलभन्त ; स त्वं देवानाममरणायागच्छेति पूर्वेण सम्बन्धः ॥

"नवग्वा"-"नवग्वो"—इति पाठौ, "आयत"-"आनशुः" —इति च ॥ २ ॥ १७

१ २ १ २ १२ २ १
॥ बृहत्कम् ॥ तुवꣳह्री। अङ्गदैवा२ ३ या। पाव
२र १ २र १ ० १ २ २ ४
मानजनिमानि। द्यूमत्तामा२ः। अमार्त्ता३त्वा३। य
५ ४ ५ १ २ १ २र १र
घोवा। षा५योꣳहायि ॥(१) अमृता। त्वायघोषा२३
२ १ २र१ २र १ २ १र
यान्। यायिनानवग्वाद्ध्यङ्। आपो१ꣳणूता२यि। येना
२ २ ४ ५ ४ ५ १र२१
वा३यिप्रा३। सत्रोवा। पा५यिरोꣳहायि ॥(२) येनवी।
२र १र २ १ र २र १र२ १ २ १
प्रासआपा२३यिरायि। दायिवानाꣳसुम्ने अमृत। स्या
२ १र २ २ ४ ५ ४ ५
चा१रूणा२ः। येनाआ३त्रा। सियोवा। शा५तोꣳहा
यि(३) ॥ १६ * ॥[१]

* ऊ० गा० २प्र० २अ० १६ सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र २ ३ ४ र ३
॥ स्वारसौम्॥ त्वꣳह्याङ्गदैवा३या। पवमानज

४ ५र र १ ३ ५ १ २ २
निमानिद्युमा। हुम्। ता२३४माः। आमा ३ उवा।

र १र २ ५ ४ ५ २
ताल्वा। यद्यो२३४वा। षा५यो६ हायि॥(१) अमृत

र र १ ३र ४र ३ ४ र ३ ४ ५र १ २
त्वायघोषा३र्यान्। येनानवन्वाद्ध्यङ्ङपो। हुम्। णू

५ १ १ २ १र १ १ ५
२३४तायि। यायिना३उवा। विप्रा। सओ२३४वा।

४ ५ २र ऽ र र २ ४ र
पा५यिरो६हायि॥(२) येनविप्रासआपा३यिरायि। दे

२र ४र २र ४ ३ ४ ५ र १ ३ ५ १ २
वानासुम्ने अमृतस्यचा। हुम्। रू२३४णाः। यायिना

२ १र २ १ ५ ४ ५
३उवा। अवा। सियो२३४वा। श्रा५तो६हायि(३)॥१६*॥[२]

१ २ १र १
॥ शाक्कुम्†॥ तुवꣳहिया। ए२। गदा। विया।

र र २ १ २ १
पवमानजनिमानिमानिद्युमत्ता२३माः। आमा२त्तोल्वा

२ १ ५ ४ ५ १ २ १र
२३। यघो२३४वा। षा५यो६हायि॥(१) अमृतत्वा।

१ र र २ १र २
ए२। यघो। षयान्। येनानवन्वादध्यङ्पोर्णू२३तायि।

---

* ऊ० गा० ५प्र० २ख० १६ सा०। † "शक्क"—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ २ १ ५ ४ ५
यायिना २वायिप्रा२३ । सओ२३४वा । पापुयिरो ६ हा

१र २ १र १ र र र
यि ॥(२) येनविप्रा । ए२ । सआ । पिरायि । देवा

र र २ १र २ १ १ २
नाꣳसुम्ने अमृतस्यचारू२३णाः । यायिना २स्नावार२३ । सि

१ ५ ४ ५
यो२३४वा । ष्पापूतो६हायि(३) ॥ १८ * ॥ [३]

३ २ र ५
॥ सत्रासाहीयम् ॥ तुवा३४म् । हियज्ञदैविय । ओ

५ १ र र १ १
६वा । पवमानजनिमानिद्युमत्ता २माः । आ २मा । ता

२ १ ऽ २र ३र २ १ ५ ५
२३त्वा । यद्यौ३र्हो । वाहा३४३यि । षा२३४ यो ६ हा

३ २ र र र ५ ५ १र र
यि ॥(१) अमा३४ । तात्वायघोषयन् । ओ६वा । येना

र र १ १ २
नवम्वादध्यङ्ङपोर्णू २तायि । या २यिना । वा२३यिप्रा ।

१ ऽ २र ३र २ २ ५ ५
सऔ३र्हो । वाहा३४३यि । पा२३४यिरो६हायि ॥(२)

३र २ र र र ५ ५ १र र र र
येना३४ । विप्रासआपिरे । ओ६वा । देवानाꣳसुम्ने

* ऊ० गा० ११प्र० २ख० १८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र १ १ २ १ ६
अमृतस्यचारू२णाः । या२यिना । आ२३वा । सियौ३

२र ३र २ १ ५ ५
हों । वाहा३४३यि । शा२३४तो६हायि(३) ॥ १२ * ॥[४]१७

अथ तृतीयतृचे† —प्रथमा ।

१ २ ३ २ ३ २उ ३ २ ३ १ २
सोमःपुनानऊर्म्मिणाव्यंवारंविधावति ।

१ २ ३ १ २र ३ १ २
अग्रेवाचःपवमानःकनिक्रदत् ॥ १ ‡ ॥

"पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अवेः सम्बन्धिनं "वालं" पवित्रं "वि धावति" विविधं गच्छति । कीदृशः सोमः ? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ॥

"अव्यम्"-"अव्ये"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ २ २ ३ २ ३ १ २ ३ १ २
धीभिर्मृजन्तिवाजिनंवनेक्रीडन्तमत्यविम् ।

३ १ २ ३ २ ३ १ २ १ २
अभित्रिपृष्ठम्मतयःसमस्वरन् ॥ २ ¶ ॥

"वाजिनं" बलवन्तं वा "नवनीये" वसतीवर्याख्ये उदके

* ऊ० गा० १९प्र० १ख० १२सा० । † 'आतीषादीयं साम'—इति वि० ।

‡ छ० आ० ६, २, २, ७ ( २ भा० २१४ पृ० ) = ऋ० वे० ५, ५, १०, ५ ।

¶ ऋ० वे० ५, ५, ११, १



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"क्रीडन्तं" सङ्क्रीडमानम् "अत्यविम्" [ अविशब्देन तद्रोमकृतं पवित्रमभिधीयते] अतिक्रान्त-पवित्रं सोमम् ऋत्विजः "धीभिः" स्तुतिभिः * "मृजन्ति" शोधयन्ति [ यद्वा, धीभिः—वर्णलोपश्छान्दसः, धीतिभिः अङ्गुलीभिः मृजन्ति ] किञ्च "त्रिपृष्ठं" [ त्रीणि पवित्राणि द्रोणकलशाधवनीयपूतभृदात्मकानि पात्राणि स्पृशतीति त्रीणि सवनानि वा स्पृशतीति स तथोक्तः, तम् ] सोमं "मतयः" स्तुतयः "अभि समस्वरन्" अभितः संस्तुवन्तीति ॥

"मृजन्ति"-"हिन्वन्ति"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ २ २ ३ २उ ३ १ २ ३ २
असर्जि कलशाꣳ अभिमीढ्वांत्सप्तिर्नवाजयुः ।

३ १ २र ३ १ २
पुनानोवाचञ्जनयन्नसिष्यदत् ॥ ३† ॥ १८

"वाजयुः" यजमानानामन्नमिच्छन् "मीढ्वान्" सेक्ता ‡ स सोमः "कलशान्" "अभि" लक्ष्य, कलशेषु "असर्जि" असृज्यत । तत्र दृष्टान्तः—"सप्तिर्न" यथा सर्पणशीलोऽश्वः ¶ सङ्ग्रामे सृज्यते तद्वत् । ततः "पुनानः" पूयमानः सोमं

* 'धीभिः बुद्धिभिः'—इति वि० । † ऋ० वे० ५, ५, ११, २ ।

‡ 'मीढ्वान् बलवान्'—इति वि० ।

¶ 'सप्तिर्न—सप्तिरश्वोऽभिधीयते'—इति वि० । "सप्तिः"—इति निघण्टावश्वनामसु पञ्चमं पदम् ( १, १४, ) ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वाचं" शब्दं "जनयन्" उत्पादयन् "असिष्यदत्" पात्रेषु स्यन्दति ॥

"मीढ्वान्"--"मेल्हा"—इति पाठौ ॥ ३ ॥ १८

३र ४ ५ र २ ३ ४र ५
॥ आतीषादीयम् ॥ सोमःपुना। हो। नऊर्म्मिणा

५ १ र २ २ २ २ ३ २ १
इए। अव्यंवारंविधा१वा३तो। अग्रेवा२३४५। चा२

१ १ १ २ १ २ १ ३ ५र र २
३४५ः। पवमा२३ना३ः। कार्नार२३४औहोवा। क्रद

३ १ १ १ १ ३र ४ ५ र २ ३ ४र ५ ५
दे२३४५ ॥(१) धीभिर्मृजा। हो। तिवाजिनाइमे।

१ र र २ २ २ ३ ३ १
वनेक्रीडन्तमा१त्या३वायिम्। अभित्रा२३४५यि। पा२

१ १ १ २ १ २ १ ३ ५र र २
३४५। ष्टम्मता२३या३ः। सा२मा२३४औहोवा। स्वर

३ १ १ १ १ १ ३ ४ ५ र २ ३ ४र ५ ५
न्ने२३४५ ॥(२) असर्ज्जिका। हो। लशा२अभोइए।

१र र २ २ ० ७ ३ १ १ १ १ २
मीढ्वान्सप्तिर्न्नवा१जा३यूः। पुनानो२३४५वा२३४५। च

१ २ १ ३ ५र र २ ३ १ १
ञ्जना२३या३न्। आ२सा २ ३ ४ औहोवा। ष्यद्दे २ ३

१ १
४ ५ (३)॥ १७ * ॥ [१]

---

* ऊ० गा० २प्र० २श्च० १७सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र १ २ १
॥ सुज्ञानम् ॥ सोमःपुना। नऊर्म्मिणा। अव्यवा

र १ २ र १ १
रा२म्। विधावतायि। अग्रेवाचा२ः। पव। मा२

३ ५र र १ २ २र
ना२३४औहोवा। कनिक्रदद्दे३ ॥(१) धीभिर्मृजा। ति

र १ २र १ १ २
वाजिनाम्। वनेक्रायिडा२। तमत्यवायिम्। अभि

१ १ २ ५र र १ २
त्रायिपा२। ष्टम्म। ता२या२३४औहोवा। समस्वरन्ने

२ र १ २र र १
३ ॥(२) असर्ज्जिका। लशा८अभायि। मीढान्त्साप्ता२

र१ २ र १ १ ३
यिः। नवाजयूः। पुनानोवा२। चञ्ज। ना२या २ ३

५र र १ २ १ ११ ११
४औहोवा। असिष्यदद्दे३उपा२३४५ (३)॥ ८ * ॥ [२]

१र र १ र १
॥ शुध्यम् ॥ सोमःपुना२नः। ऊर्म्मिणोवा। अव्यं

२र १ २ २र २ १ र १र १ २र १
वाराम्। विधावतायि। अग्रेवाचःपवमानःक्र। ना२

२ १र १र
३यि। क्रदाउवा। अूधिया२ ॥(१) धीभिर्मृजा२न्ति।

र १ २ १र २र १ २ ३ २ १ २ १ २ १
वाजिनोवा। वनेक्रीडा। तमत्यवायिम्। अभित्रिपृष्ठ

---

* ऊ० गा० ७प्र० २ष० ९सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ १ १ २ १र

म्मतयःसम् । आ२३ । स्वराउवा । अूधिया२ ॥(२)

१ र १ २र१र१ १ २

अमर्त्ज्जिका२ल । म्पा३ अभोवा । मीठात्सम्मायिः । न

१र२१ ०र१र र र१२१

वाजयूः । पुनानोवाचञ्जनयन्न । सा २ ३यि । ष्पदाउ

१र १ २ १

वा । अूधिया२ । ए२३हिया३४३ । ओ २ ३ ४ ५ ई ।

डा (३)॥ ४ * ॥ [३]

२र १ र र २र १

॥ ओम् ॥ सोमाः । पुनानानऊर्म्मि । णा । हो

१ २र १ र र २ १

ई२ । हो । वाहोयि । अव्यंवारंविधावतायि । अग्रा

२ २ १२ १ १ २

यिवा१चा२३ः । पा३वामा३नाः । कना२३यिक्रदा३४३

२र १ र २ १

त् ॥(१) धीभीः । मृजन्तिवाजि । नम् । होई२ ।

१ २र १ र र १ १ २

हो । वाहोयि । वनेक्रीडन्तमत्यायिम् । अभायित्रा१

२ १ २ १ १ २

यिपा२३ । ष्टा३म्माता३याः । समा२३स्वरा३४३न् ॥(२)

१ १ र २ १ १ २र

अमा । जिकलशा३अ । भि । होई२ । हो । वा

* क० गा० ९प्र० १ख० ४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१      २ २      २      २ १ २      २
होयि। मौद्वात्मग्निर्न्नवाजयू। पुनानो१वार३। चा३

१   २   २     १     २     १
ञ्जाना३यान्। असार३यिष्यदां३४३त्। ओर२३४५ई।

डा (३)॥ ११ *॥ [४] १८

अथ चतुर्थतृचे†—प्रथमा।

१ २     ३ १ २ ३ १
सोमःपवतेजनितामतीना

२ ३२ ३ १ २ ३ २ २ ३ २
ञ्जनितादिवोजनितापृथिव्याः।

३ १ २र ३ २र
जनिताग्नेर्जनितासूर्य्यस्य

३ १ २   ३ १   २र
जनितेन्द्रस्यजनितोतविष्णोः॥ १ ‡॥

"सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति। कीदृशः? "मतीनां" बुद्धीनां [ यद्वा, मननीयानां ] "जनिता" जनयिता, [ "जनिता मन्त्रे (६, ४, ५३)"—इति निपातनाण्णिलोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता, तथा

---

* ऊ० गा० १५प्र० २ख० ११सां०।

† 'वात्सप्रं' साम सोमस्यायं स्तुतिः'—इति वि०।

‡ छ० आ० ६,/१, ४, ५ (२ भा० ११७४० ) = ऋ० वे० ७, ४, ६, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पृथिव्याः" "जनिता", "अग्नेः" 'जनिता" प्रकाशयिता, "सूर्य्यस्य" सर्वस्य प्रेरकस्यादित्यस्य "जनिता", "इन्द्रस्य" "जनिता" तेन मदस्य जनयिता "उत" अपिच "विष्णोः" व्यापकस्य "जनिता" जनयिता;—एतत्सर्वं सोमेऽभि षूयमाणे भवतीति ॥ १ ॥

अथ द्वितीया।

३ २ ३ १ १ ३ १२ २
ब्रह्मादेवानाम्पदवीःकवीना*

३ १ २ ३ २ ३ १ २
मृषिर्विप्राणाम्महिषोमृगाणाम्।

२ १ २२३ १ २ ३१ ३
श्येनोगृध्राणाꣳस्वधितिर्वनानाꣳ

१ २ ३ २३१२ ३ १ २
सोमःपवित्रमत्येतिरेभन्॥ २ † ॥

"सोमः" एवंरूपो भवति—"देवानां" स्तोत्रकारिणा मृत्विजां "ब्रह्मा" ब्रह्माख्यर्त्विक्स्थानीयो भवति [यद्वा, "देवानां" द्योतमानानामिन्द्रादीनां "ब्रह्मा" राजा भवति] तथा "कवीनां" क्रान्त-प्रज्ञानां "पदवीः" [स्खलन्ति पदानि साधुत्वेन यो योजयति स पदवीः, वी गत्यादिषु ( अदा०, उभ० )—इत्येतस्मात् क्विपि

* "देवोष्कवीना"—इति क० पु० पाठः। † ऋ० वे० ७, ८, ०, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रूपम् ], तथा "विप्राणां" मेधाविनां मध्ये "ऋषिः" भवति [ यः परोक्षं पश्यति स ऋषिः "ऋषिर्दर्शनात् ( निरु० २, ११ )"—इति, ] "मृगाणां" "महिषो" भवति महिषाख्यो बलवान् राजा भवति तथा "गृध्राणां" पक्षिविशेषाणां "श्येनः" शंसनीयः पक्षिराजो भवति, "वनानां" [ वनतिर्हिंसाकर्मा ] हिंसकानां छेदकानां मध्ये "स्वधितिः"—एतन्नामकश्छेदकोऽसि। एवम्प्रभावः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन कृतम् "अत्येति" अतिगच्छति * ॥ २ ॥

* अत्राह यास्कः—"ब्रह्मादेवानामित्येष हि ब्रह्मा भवति देवाना देवनकर्मणामादित्यरश्मीनां पदवीः कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानाना मादित्यरश्मीना ऋषिर्विप्राणामित्येष हि ऋषिणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनां महिषो मृगाणामित्येष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां श्येनो गृध्राणामिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणो गृध्र आदित्यो भवति गृध्यते स्थानकर्मणो यत एतस्मिंस्तिष्ठति स्वधितिर्वनानामित्येष हि स्वयं कर्माण्यादित्यो धत्ते वनानां वननकर्मणामादित्यरश्मीनां सोमः पवित्रमत्येति रेभन्नित्येष हि पवित्रं रश्मीनामत्येति स्तूयमान एष एवैतत्सर्वमक्षरमित्यधिदैवतमथाऽध्यात्मं ब्रह्मा देवानामित्ययमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणां पदवीः कवीनामित्ययमपि पदं वेत्ति कवीनां कवीयमानानामिन्द्रियाणामृषिर्विप्राणामित्ययमप्यृषिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणां महिषो मृगाणामित्ययमपि महान् भवति मृगाणां मार्गणकर्मणामिन्द्रियाणां श्येनो गृध्राणामिति श्येन आत्मा भवति श्यायतेर्ज्ञान-कर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञान-कर्मणो यत एतस्मिंस्तिष्ठन्ति स्वधितिर्वनानामित्ययमपि स्वयंकर्माण्यात्मनि धत्ते वनानां वननकर्मणामिन्द्रियाणां सोमः पवित्रमत्येति रेभन्नित्ययमपि पवित्रमिन्द्रियाण्यत्येति स्तूयमानोऽयमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे ॥"—इति निरु० प० २, १३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ ३ २ ३ २ २
प्रावीविपद्वाचऊर्म्मिन्नसिन्धु

२३ २ २ १ २ ३ ३ २
र्गिरस्तोमान्पवमानोमनीषाः।

३ २ २र ३२३१ २३ १
अन्तःपश्यन्वृजनेमावराण्या

२ ३ १ २र ३ २
तिष्ठतिवृषभोगोषुजानन्॥ ३ *॥ १९

"पवमानः" सोमः "मनीषाः" मनसईशिता हृदयङ्गमान् "प्रावीविपत्" प्रकर्षेण विपर्यति † प्रेरयति "सिन्धुर्न" स्यन्दमान-नदीव "वाचः" शब्दस्य "ऊर्मिं न" सङ्घं यथा प्रेरयति तद्वत्। किञ्च "वृषभः" कामानामुदकानां वा वर्षकः सोमः "अन्तः" अन्तर्हितं वस्तुजातं ‡ "पश्यन्" "अवराणि" दूर्वलैः वारयितुमशक्यानि "इमा वृजना" ¶ इमानि बलानि "आ तिष्ठति" आसीदति। किं कुर्वन्? "गोषु जानन्" § गवां जयाय जानानः सन् परबलानि प्रविशति॥

"स्तोमान्"-"स्तोमः"—इति पाठौ॥ ३॥ १९

---

* ऋ० वे० ७, ४, ७, २। † 'वेपयति'—इति वि०।

‡ 'अन्तः हृदये'—इति वि०।

¶ 'वृजना वृजनानि छिद्राणि शरीरावस्थितानि'—इति वि०।

§ 'गोषु जानन्—गोशब्देन रश्मयः ता एव नाड्यो गृह्यन्ते; वृषभो वर्षिता; गोषु अप्सु नाडीषु जानन्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र र १
॥ महावात्सप्रम् ॥ हाउहाउहाउ। औ। होहो

२ २ २ र १ २ १ २
वा। ओ। होहोवा। सोमःपवा। तेऽजनि। ताऽ

र र र र र र १र
मतीनाम्। मतीनाम्। मतीनाम्। जनिताहायि।

२ १ १ र र र
वोऽजनि। ताऽपृथिव्याः। पृथिव्याः। पृथिव्याः। ज

१र २ १ र २ र र
निताग्नायिः। जनिता। सूऽरियस्या। रियस्या। २।

१र २ १ २ र र
जनितेन्द्रा। स्याऽजनि। तोऽतविष्णोः। तविष्णोः। २।

१र र २ १ २ र र र र
ब्रह्मादेवा। नाम्पद। वीःकवीनाम्। कवीनाम्।

र र १ २ १ २ र र
कवीनाम्। ऋषिर्विप्रा। णाम्महि। षोऽमृगाणाम्।

र र र १र २ १ २ र
मृगाणाम्। २। श्येनोगृध्रा। णाꣳस्वधि। तिर्वना

र र र र १ २ १ १र
नाम्। वनानाम्। २। सोमःपवायि। त्राऽमति। एऽ

र र र १र २ १ र
तिरेभन्। तिरेभन्। २। प्रावीविपात्। वाऽचऊ।

२ १ र
मिन्नसिधुः। नसिन्धुः। नसिन्धः। गिरःस्तोमान्।

( ७२ )



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ र २ र र १
पवमा। नोऽमनीषाः । मनीषाः। २। अन्तःपश्यान्।

२ १ र २ र र र १
वृजने। माऽवराणी। वराणी। २। आतिष्ठतायि।

२ १ २ र र २र
वृषभः। गोऽभुजानन्। भुजानन्। २। हाउ। ३।

१ २ १ ३
ओ। होहोवा। २। ओ। हो। होर। वार३४

५र र ३ १ १ १ १
औहोवा। ई२३४५ (३)॥ १८ *॥ [१]

२र १ २र १ २
॥ जनित्राद्यम्॥ हाउजनत्। सोमःपवा। ते३

१ २ ३ र ५ २ १र २ १ १
जेनि। तामतीनाम्। जनितादायि। वो३जनि। ता

३ ४ ५ २ १र २ १ र २ ३ ४ ५
पृथिव्याः। जनिताग्नायिः। जनिता। सूरियस्या।

२ १ र २ १ २ २ ४
जनितेन्द्रा। स्या३जनि। तो३४३। ता३वापूयिष्णो६५

२ १र र २ १ २ ३ ४ ५ २
६ः॥(१) ब्रह्मादेवा। ना३पद। वीःकवीनाम्। ऋ

१ २ १ २ २ ४ ५ २र १र २
षिर्विप्रा। णा३म्महि। षोमृगाणाम्। श्येनोगृध्रा। णा

१ २ ३ ४ ५ २र १ २ १
३ऽस्वधि। तिर्वनानाम्। सोमःपवायि। चा३मति।

* ऊ० गा० २प्र० २अ० १९सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १र १र
आ३४३यि । तीऽराऽयिभाई५६न् ॥(२) प्रावीविपात् ।
२ १र २ ३ ४५ २१ र २ १ र
वा ३ चऊ । मिन्नसिधूः । गिरस्तोमान् । पवमा ।
२ ३ ४ ५ २ १ २ १ र २ ३ ४ ५ २र
नोमनीषाः । अन्तःपश्यान् । वृजने । मावराणी । हा
१ २र १ २१ २ २
उजनत् । आतिष्टतायि । वृषभः । गो ३ ४ ३ । षू३
४
जा५ुनाई५६न्(३) ॥ १ * ॥ [२]

४र ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमाऽ५ः प । वा३तारयिजनि
५ १ र र र र २ १ २
ता । मतीनाञ्जनितादिवोजनायि । ता३पार्था ३ यि
२ १ १र र र २ १
व्याः । जना२यिताग्ने र्ज्जनि । तासू२३री । ऊम्मायि ।
२ २ १ऽ र र २ २ १
या३स्या । जानितेन्द्रस्यजनितोता२रविष्णाउ ॥(१) ष्णौं
२ १र र र र र र र र र २
ब्रा । ह्माद्वानांपदवीःकवीनामृषिर्विप्राणाम्महायि । षो
१ २ २ १र १ र र र
३माग्गा३णाम् । श्येनो२गृध्राणाᳫस्वधितिर्वनाना२३ᳫ
२ १ २ २ १ र ३र २
सो । ऊम्मायि । मा३ःपा । वायित्रमत्येता २ यिरेभा

* ऊ० गा० ८प्र० २अ० १सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १र र र र र
भान्प्रा। वीविपद्वाचऊर्म्मिन्नसिन्धुर्गिरस्स्तोमान्यवमा।
२ १ २ र १ १ र र र
नो३माना३यिषाः। अन्ता२ःपश्यन्वृजनेमाव। राणा
२ १ २ २ १ र र
२३आ। ऊम्मायि। ता३यिष्ठा। तायिवृषभोगोषू२
३र २ १ १ १
जानाउ। वा३४५(३) ॥ १० * ॥ [३]

१र २ १ २र १ र
॥ श्यावाश्वम् ॥ सोमःपवा। तेजनितामता२यि
१ १ र र र १
नाउया२। जनितादिवोजनिताष्टथा२यिव्याउवा२३४।
३ २ २र २ १ र र २ १ १ २र १
जना३४यितामेः। जनितासूरियास्या२। जानितेन्द्रा।
२ १ ४ ५ ४ ५ १ २र
स्याजनिता२३। तोवा। वा५यिष्णो६हायि ॥(१) ब्रह्मा
र १ २र १ र १ १ र र
दवा। नाम्पदवीःकवा२यिनाउवा२। ऋषिर्विप्राणां
र १ ३र २ २ १ १र
महिषोमृगा२णाउवा २ ३ ४। श्येनो३४गृध्रा। णा६स्व
२ १ १ २ १ २ १
धितिर्वनाना२म्। सोमःपवायि। त्यामतिया २ ३ यि।
४ ५ ४ ५ १र २र १ १र १
तोवा। रा५यिभो६हायि ॥(२) प्रावीविपात्। वाच

* उ० गा० २२प्र० १ख० १०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२　　　　१　　　　१ २ २　　२ २
ऊर्म्मिन्नसा२यिन्धाउवा२। गिरस्स्तोमान्यवमानोम्मना

१　　　　२ २　３ २　　१ २ २ २ १
२यिषाउवा२३४। अन्ता३४:पश्यान्। वृजनेमावराणा

१　　२ १　　　२२ १　　४ ५　४
२यि। आतिष्ठतायि। वार्षभोगो२३। पोवा। जा५

५
नो६हायि (३)॥ १६ *॥ [४] १९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
षष्ठः खण्डः† ॥ ६ ॥

---

अथ तृचत्रयात्मके सप्तमे खण्डे‡,
प्रथमतृचेण¶—प्रथमा ।

३ १२ ३१ २ २　३ १ २　３ १ २
अग्निं वोवृधन्तमध्वराणाम्पुरूतमम् ।

२ ३२३१ २
अच्छानप्त्रे सहस्वते ॥ १§ ॥

---

० ऊ० गा० २३प्र० १ख० १६सा० ।

† 'यज्ञायज्ञीयमग्निष्टोमीयं साम'—इति वि० ।

‡ 'इदानीमुक्थानि'—इति वि० ।

¶ 'सौरभं ब्रह्मसाम वसिष्ठस्य प्रियतम मच्छावाकसाम'—इति वि० ।

§ छ० आ० १, १, ३, १ (भा० १२७ पृ०) = ऋ० वे० ७, ७, १०, ३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अध्वराणाम्" अहिंस्यानां बलिनां "नप्त्रं" बन्धुं "सहस्वते" बलवन्तं [ विभक्तिव्यत्ययः ( ३, १, ८५ ) ] "वृधन्तं" ज्वालाभिर्वर्द्धमानं "पुरूतमम्" अतिशयेन बहुमग्निं हे ऋत्विजः ! "वः" यूयम् "अच्छ" अभिगच्छत । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥१॥

अथ द्वितीया ।

३ १र २र ३ २ ३ १ २ ३ २ ३ १ २
अयंयथानआभुवत्त्वष्टारूपेवतक्ष्या ।
३ २उ ३ १ २
अस्यक्रत्वायशस्वतः ॥ २* ॥

"अयम्" अग्निः "नः" अस्मान् "तक्ष्या" विकर्त्तव्यानि "रूपेव त्वष्टा" रूपाणि वर्द्धकिरिव "यथा" येन प्रकारेण "आ भुवत्" आ भवति प्राप्नोति, तथैनमग्निमभिगच्छतेत्यर्थः । किञ्च वयम् "अस्य" अग्नेः "क्रत्वा" † प्रज्ञानेन युक्ताः "यशस्वतः" यशस्वन्तो ‡ भवामेति शेषः ॥ २ ॥

अथ तृतीया ।

३ १ २र ३ २उ ३ २ ३ १ २
अयंविश्वाअभिश्रियोग्निर्देवेषुपत्यते ।
२उ ३ १ २
आवाजैरुपनोगमत् ॥ ३¶ ॥ २०

* ऋ० वे० ७, ७, १०, २ ।

† 'क्रत्वा—तृतीयैषा षष्ठी-स्थाने द्रष्टव्या क्रतो' इति वि० ।

‡ 'यशस्वतो यशसा सम्पन्नस्य'—इति वि० ।

¶ ऋ० वे० ७, ७, १०, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मनुष्याणां "विश्वाः" सर्वाः "श्रियः" सम्पदः * "देवेषु" देवानां मध्ये यः "अयम् अग्निः"† "अभिगच्छति, सः अग्निः "नः" अस्मानपि "वाजैः" अन्नैः "उपागमत्" उपागच्छतु॥३॥२०

२ र १ २ १
॥ स्वारसैन्धुक्षितम्॥ अग्निर्वीत्रृधान्ताम्। आध्व
२र र १ २र र २ १ १
राणाम्। पुरुहूतामौ। होवा३हायि। आच्छा२नाम्र२३।
२ १ ५ ४ ५ २ र र १ २
सहो२३४वा। स्वा५तो६हायि॥(१) अयंयथानआभूवात्।
१ र२र र १ २र र २ १ १
त्वाष्टारूपे। वताहायौ। हौवा३हायि। आस्या२क्रा
२ १ ५ ४ ५ २
त्वा२३। यशो२३४वा। स्वा५तो६हायि॥(२) अयंवि
र १ २ २र र १ २र र २
श्वाअभिश्रायाः। आग्निर्द्देवे। षुपात्याती। होवा३हा
१ १ २ १ ५ ४ ५
यि। आवा२जायिरू२३। पनो२३४वा। गा५मो६हा
यि (३)॥ २० ‡ ॥ [१]

---

* 'अभिश्रियः—अभिश्रयणमालम्बनं सर्वाणालम्बनानि'—इति वि०।

† 'अग्निः देवेषु भवति यदा अरणिभ्यां पत्यते। पत्यत इति छान्दसः प्रयोगो न दोषः'—इति वि०।

‡ ऊ० गा० २प्र० २ख० २०गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ २ र

॥ सत्रासाहियम् ॥ अग्ना ३ ४ यिम्। वोवृधन्तम्।

५ ५ १ र र र १ १

ओ६वा। अध्वराणाम्पुरुहूता२मम्। आ२च्छा। ना

र १ ८ २र २र २ १ ५ ५

२३म्र्। सहौ२हो। वाहा३४३यि। स्वा२३४तो६हा

३ २ र र ५ ५

यि ॥(१) अया ३ ४ म्। यथानआभुवत्। ओ६वा।

१ र र र १ १ २ १ ८

त्वष्टारूपेवतक्षा२थ्या। आ२स्या। क्रा२३त्वा। यशौ२

२र ३र २ १ ५ ५ ३ २

३हो। वाहा३४३यि। स्वा२३४तो६हायि ॥(२) अया

र ५ ५ १ र र

३ ४म्। विश्वाअभिश्रियः। ओ६वा। अग्निर्देवेषुपत्या

१ २ १ ८ २र ३र

२तायि। आ२वा। जा२३यिरू। पनौ ३ हो। वा

२ १ ५ ५

हा३४३यि। गा२३४मो६हायि(३) ॥ ११ * ॥ [२] २०

---

* ऊ० गा० ६प्र० २ख० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीयतृचे—प्रथमा।

२१ २ २१२२२३१२ ३१२
इममिन्द्र सुतम्पिब ज्येष्ठममर्त्त्यम्मदम्।

२ ११ ३क २र १ २ ३ २ ३ १ २
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ १ * ॥

हे "इन्द्र!" "सुतम्" अभिषुतम् "इमं" सोमं "पिब" कोदृशम्? "ज्येष्ठम्" अतिशयेन प्रशस्यं "मदं" मदकरम् "अमर्त्त्यम्" अमारकम् [सोमपान-जन्यो मदो मदान्तरवत् मारको न भवतीत्यर्थः] तथा "ऋतस्य" यज्ञस्य सम्बन्धिनि "सादने" गृहे वर्त्तमानाः "शुक्रस्य" दीप्तस्यास्य सोमस्य "धाराः" "त्वाम्" "अभ्यक्षरन्" आभिमुख्येन सञ्चलन्ति त्वां प्राप्तुं स्वयमेवा-गच्छन्तीत्यर्थः [ज्येष्ठं—प्रशस्य-शब्दादियसुनि "ज्य च (५,३,६१)"—इति ज्यादेशः। अक्षरन्—क्षर सञ्चलने (भ्वा०, प०) छान्दसो लङ् (३, ४, ६)॥ १॥

अथ द्वितीया।

२ ३ १ २ १ २ ३ २ ३ १ २ ३ १ २
नकिष्टद्रथीतरो हरी यदिन्द्र यच्छसे।

१ २ १ २ ३ १ ३ २ ३ १ २
नकिष्टानु मज्मना नकिः स्वश्व आनशे ॥ २ † ॥

* छ० आ० ४, २, १, ३ ( १ भा० ७०२ पृ० )=ऋ० वे० १, ६, ५, ४।

† ऋ० वे० ६, ४६, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्र!" "यद्" यस्मात् त्वं "हरी"—एतन्नामकावश्वौ* "यच्छसे" रथे योजयसि, तस्मात् "त्वद्" त्वत्तोऽन्यः कश्चित् "रथीतरः" अतिशयेन रथवान् "नकिः" नास्ति [अन्येषामीदृगश्वयुक्तरथाभावात]"त्वा" त्वाम् "अनु" लक्ष्य "मज्मना" [बलनामैतत् (निघ० २, ९, २३)] बलेन सदृशोऽपि "न किः" नह्यस्ति "स्वश्वः" शोभनाश्वो "न किः आनशे" न प्राप [इन्द्रस्य बलाश्वयोरसाधारणत्वात् इन्द्रसदृशो बलवान् अश्ववान्] लोके कश्चिदपि नास्तीत्यर्थः [न किष्टत्—"युष्मत्तत्ततक्षुष्वन्तः पादम् (८, ३, ११३)"—इति षत्वम्। रथीतरः—अतिशयेन रथी; तरपि "ईद्रथिनः"—इति ईकारान्तादेशः। यच्छसे—यमेर्व्यत्ययेनात्मनेपदम्। स्वश्वः—बहुव्रीहावाद्युदात्तं दसीत्युत्तर-पदाद्युदात्तत्वं। आनशे—"अश्नोतेश्च (७,४,७२)"—इति अभ्यासादुत्तरस्य नुट्॥ २॥

अथ तृतीया।

१ २ ३१२ ३ १ २
इन्द्रायनूनमर्चतोक्थानिचब्रवीतन।
३ १ २ ३१२३ १ २ ३ १ २
सुताअमत्सुरिन्दवोज्येष्ठन्नमस्यतासहः॥ ३ † ॥२१

---

* "हरी इन्द्रस्य"—इति नैघण्टुकम् १,१५,१।

† ऋ० वे०,१,६,४,५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे ऋत्विजः! "इन्द्राय"* "नूनं" क्षिप्रम्† "अर्चत" पूजनं कुरुत। एतदेव स्पष्टीक्रियते—"उक्थानि" अप्रगीत-मन्त्र-साध्यानि शस्त्राणि स्तोत्राणि च "ब्रवीतन" ब्रूत। "सुताः" अभिषुताः "इन्दवः" सोमाः त्वाम् "अमत्सु" आगत मिन्द्रं मत्तं कुर्वन्तु, अनन्तरं "ज्येष्ठं" प्रशस्यतमं "सहः" सहस्विनं बलवन्तम् तमिन्द्रं नमस्यत नमस्कुरुत [ब्रवीतन—ब्रवीते लोटि "तप्तनप्तनथनाश्च (७,१,४५)"—इति तनबादेशः। अमत्सु—मदी हर्षे (भ्वा०,आ०) छान्दसः प्रार्थनायां लुङ्, आगमानुशासनस्यानित्यत्वादिड्भावः। नमस्यत—"नमोवरिवश्चित्रङः (३,१,१९)" —इति क्यच्। सहः—"युगकारेकाररेफाश्च वक्तव्याः—इति मत्वर्थीयस्य लुक्॥ ३॥ २१

॥ वसिष्ठप्रियम्॥ इममो२३। द्रसुतम्पिब। ज्येष्ठाम्। अमा३र्त्त्यम्मादा२म्। शुक्रास्यत्वा३। भिया२क्षा२३४रान्। धाराऔ२३४वा। आर्त्तओ२३४वा। स्यसा५दनायि॥ (१) नकिष्टू२३। वद्रथीतरः। हारी। यदीऽ३न्द्रायच्छासा२यि। नकायिष्टूवा३। नुमा२ज्मा२३४

---

* 'इन्द्रायेति चतुर्थी द्वितीयार्थे द्रष्टव्या, इन्द्रम्'—इति वि०।

† 'नूनं निश्चितम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ १ १ ५ १ १ ३ ५ ४
ना। नाकाओ२३४वा। सूवाओ२३४वा। श्वआ५नआ

२ १र ४र ५ ४ ५ १ १ १
यि॥(२) इन्द्राया२३। नूनमर्च्चं। तोक्था। निचा३ब्रावी१

१ २ १ २ ५ १
ताना२। सुताआमा३। त्सुरीरन्दा२३४वाः। ज्यायि

२ ३ ५ १ २ ३ ५ ४ ४
ष्ठाओ२३४वा। नामाओ२३४वा। स्यता५सद्वाः। हो

५ई। डा(३)॥ १ *॥ [१]

१ २ १ र
॥ आसिताद्यम्॥ इममिन्द्रसुताम्। पिबा। ज्येष्ठम

२ १ १ १
मर्त्तियम्मा२३दाम्। पूक्का२स्यात्वा२। भियचरान्।

१ १ २ १ ५ ४ ५
धारा२आर्त्ता२। स्यसोवा३ओ२३४वा। दा५नो६हा

१ २ १ १ र २
यि॥(२) नकिष्ट्वाद्रथायि। तरो। हरीयदिद्रयच्छा२३सा

१ १ १ १
यि। नाका२रयिष्टूवा२। नुमज्मना। नाका२रयिसूवा

१ २ १ ५ ४ ५ १ र
२। श्वओवा३ओ२३४वा। ना५शो६हायि॥ इन्द्रा

२ र १ र र २ १
यनूनमा। चता। उक्थानिचब्रवीता२३ना। सूता२

* ऊ० गा० ३प्र० १अ० १सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ १ १
आमा २। त्वमिन्द्रवाः। ज्यायिष्ठा २न्नामा २। स्यतो
२ १ ५ ४ ५
वा३ओ२३४वा। सा५हो६हायि(३)॥ १७*॥ [२]

५ ३ १ ४ ५
॥ गौरीवितम्॥ इमम्। इन्द्रा३। सुतम्पिबा।
१र १ १ ४
ज्येष्ठममर्त्तियम्मदा२३म्। शूक्रस्यत्वा३१२३। भिया५च्च
१ र २ ४ ५ ४ ५
रान्। धाराक्षता३१२३। स्यसोवा। दा५नो६हायि॥(१)
५ १ २ ४ र ५ १ र
नकिः। तुवा३त्। रथीतराः। हरीयदिन्द्रयच्छसा
१ २ ४ १
२३यि। नाकिष्टुवा३१२३। नुमा५जमना। नाकिसुवा
४ ५ ४ ५ ५ र ३ २
३१२३। स्वओवा। ना५शो६हायि॥(२) इन्द्रा। यनू३।
४ ५ १ र १ र १
नमर्चता। उक्थानिब्रवीतना२३। सूताअमा३१२३।
४ १ २ ४ ५ ४
त्सुरो५दवाः। ज्यायिष्ठन्नमा३१२३। स्यतोवा। सा५
५
हो६हायि(३)॥ ३ †॥ [३] २१

* ऊ० गा० १२प्र० १ख० १७मा०।

† ऊ० गा० १२प्र० १ख० २मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीयतृचे*—प्रथमा।

१ २ ३१ ३ २ ३ १ २ ३ १ २
इन्द्रजुषस्वप्रवहायाहिशूरहरिह।
१ २ ३१ २ ३ १ १ २ र ३ २उ २ १ २
पिबासुतस्यमतिर्नमधोश्चकानश्चारुर्मदाय॥ १॥

यानि मया हवींषि दत्तानि तानि "प्र वह" "आ याहि" आगच्छ "शूर" वीर्यवन्! उपसर्गाक्षराणि—"हरिह" [अथवा हरितवर्णा हया यस्य स हरिहयः, तस्य सम्बोधनं क्रियते—हे हरिह! छान्दसो यकारलोपः] "पिबा"† "सुतस्य" सोमस्य उपसर्गाक्षराणि—"मतिर्नमधोश्चकानः", "चारुः" शोभनः "मदाय" भक्षणाय॥ १॥

---

* 'इदानीं चतुर्थेऽहनि षोडशी भवति। अस्य षोडशिनः महान् विचारः इन्द्रस्य हचस्य सम्भवता मित्यारभ्य महान् विचारो निदानसूतेत्युक्तः चतुस्त्रिंशदक्षराणि स्तुता भवन्ति। तमुपसृत्य प्रवहादीनि उपसर्गाक्षराणि निरूप्यन्ते। तथा सति आदित्रयाणां पादानां त्रीणि त्रीणि उपसर्गाक्षराणि पादान्तेषु भवन्ति'—इति वि० एवञ्च—

प्रथमर्चि—"प्रवह", "हरिह", "मतिर्न"—इति नव,

द्वितीयर्चि—"नयन्न", "दिवोन" "स्वश्र्न" इति नव,

तृतीयर्चि— "मिवोन", "यतिर्न", "भृगुर्न"—इति नव,

किञ्च प्रथमर्चि चतुर्थपदादौ च "मधोश्चकान"—इति सप्त, तदित्थं सङ्कलनया चतुस्त्रिंशदुपसर्गाक्षराणि सम्पद्यन्ते। अत्र च "स्वश्र्न", "मधोश्"—इत्युभयत्र विभागस्य द्व्यक्षरत्वेन ग्रहणं बहुविचारेण सम्पादितम्॥

† "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"स्वादोः" स्वादुभूतस्य रसयुक्तस्य "इत्था विषूवतः" इत्थमनेन प्रकारेण सर्वयज्ञेषु व्याप्तियुक्तस्य "मध्वः" मधोः मधुर-रसस्य सोमस्य "क्रियाग्रहणं कर्त्तव्यम् (१,४,३२ वा०)"—इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी। एवंविधं सोमं "गौर्यः" गौरवर्णा गावः पिबन्ति। या गावः "शोभथाः" [वचन-व्यत्ययः] इन्द्रेण सह शोभन्ते "वृष्णा" कामाभिवर्षकेन्द्रेण "सयावरीः" सह यान्त्यो गच्छन्त्यः सत्यः "मदन्ति" हृष्टा भवन्ति। ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः। "वस्वीः" पयः-प्रदानेन निवासकारिण्यः ता गावः "स्वराज्यं" स्वस्येन्द्रस्य यत् "राज्यं" राजत्वं तदनु लक्ष्यावस्थिताइति शेषः ॥ [ विषूवतः—विष्लृ व्याप्तौ (जु०उभ०) अस्मादौणादिकः कुप्रत्ययः ततो मतुप् ह्रस्वनुड्भ्यां मतुप् (६,१,१७६)"—इति मतुप उदात्तत्वम्, "अन्येषामपि दृश्यते ( ६,३,१३७ )"—इति संहितायां दीर्घः, व्यत्ययेन मतोर्वत्वम्। मध्वः—"जसादिषु छन्दसि वा वचनम् ( १,४,७ )"—इति "घेर्ङिति (७,३,१११ )"—इति गुणा-भावे यणादेशः। गौर्यः—"षिद्गौरादिभ्यश्च ( ४,१,४१ )"—इति ङीष्, जसि यणादेशे "उदात्तस्वरितयोर्यणः ( ८,२,४ )"—इति परस्यानुदात्तस्य स्वरितत्वम्। सयावरीः—या प्रापणे (अदा०प०) "आतोमनिन् (३,२,७४)"—इति वनिप्, "वनोरच ( ४,१,७ )"—इति ङीब्रेफौ। मदन्ति—मदी हर्षे (दि०प०), श्यनि प्राप्ते व्यत्ययेन ( ३,१,८५ ) शप्। वस्वीः—"वस निवासे (भ्वा०प०)शृस्वृस्निहि ( उ०,१,१० )"—इत्यादिना वसे रुप्रत्ययः, "धान्ये नित् ( उ०१,९ )"—इत्यनुवृत्ते राद्युदात्तत्वम, "वोतो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गुणवचनात् (४४,४,१)"—इत्यत्र "गुणवचनात् ङीषाद्युदात्तार्थम् (४, १, ४४ भा०)"—इतिवचनात् वसुशब्दात् ङीपि यणादेशः, जसि "वाच्छन्दसि (६,१,१०६)"—इति पूर्वसवर्णदीर्घत्वम्। स्वराज्यं—"अकर्मधारये राज्यम् (६,२,३०)"—इत्युत्तरपदाद्युदात्तत्वम्] ॥ १ ॥

अथ द्वितीया।

१ २ २ १ ३ १ २ ३ १ २
ताअस्यपृशनायुवःसोमꣳश्रीणन्तिपृश्नयः।

३ १र २र ३ १ २ ३ १ २ ३ १ २ ३
प्रियाइन्द्रस्यधेनवोवज्रꣳहिन्वन्तिसायकं

२ ३ १ २ ३ १ २
वस्वीरनुस्वराज्यम् ॥ २* ॥

"ताः" पूर्वोक्ताः† "अस्य" इन्द्रस्य "पृशनायुवः" स्पर्शनकामाः पृश्नयः नानावर्णाः‡ गावः इन्द्रेण पातव्यं "सोमं" पयसा "श्रीणन्ति" मिश्रीकुर्वन्ति, "इन्द्रस्य" "प्रियाः" प्रीतिहेतुभूताः "ताः" "धेनवः" "सायकं" शत्रूणामन्तकारकं¶ "वज्रं" आयुधं "हिन्वन्ति" शत्रुषु प्रेरयन्ति इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः। अन्यत् पूर्ववत् ॥ [हिन्वन्ति

---

* ऋ० वे० १, ६, ७, १।

† 'ताः—धेनवः'—इति वि०।

‡ 'पृश्नयः—गावः'—इति वि०।

¶ 'सायकं—शरभूतं क्षेपणीयम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ह्विवि प्रीणनार्थः (भ्वा० प०), इदित्त्वान्नुम्। सायकं—षो अन्त-कर्म्मणि (दि० प०), ण्वुल्यात्त्वे युगागमः॥ २॥

अथ तृतीया।

१ २ ३१ १ २ ३ १ २ ३१ २ ११

ताअस्यनमसासहःसपर्यन्तिप्रचेतसः।

२ ३ १ ३ १ ३११

व्रतान्यस्यसश्चिरेपुरूणिपूर्वं

२ ३ २ ३ १ २ ३ १ २

चित्तयेवस्वीरनुस्वराज्यम्॥ ३ *॥ १५

"प्रचेतसः" प्रकृष्टाज्ञानाः "ताः" गावः "अस्य" इन्द्रस्य "सहः" बलं "नमसा" स्वकीयेन पयोरूपेणान्नेन "सपर्यन्ति" परिचरन्ति "पुरूणि" बहूनि "अस्य" इन्द्रस्य "व्रतानि" शत्रु-बधादि-रूपाणि वीर्य-कर्माणि "सश्चिरे" सेविरे ज्ञातव्यतया इत्यर्थः। किमर्थम्? "पूर्वचित्तये" युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय† [अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यजन्त इति तेषां बोधनायेत्यर्थः। अन्य-त्पूर्ववत्॥ पूर्वचित्तये—चिती सञ्ज्ञाने (भ्वा० प०), भावे क्तिन्, मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्॥ ३॥ १५

---

* ऋ० वे० १, ६, ७, २।

† पूर्व-चित्तये—पूर्व-प्रसादनाय—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ३र ४ ३र ४ ५र   १ २   १र ४र ४
॥ श्यैतम् ॥ स्वादोरित्थाविषू । वता३४औहोवा ।

१ र २   १ ७   ५ ५   १र र २
माधोःपिब । तिगौरियार३४ः । ओ६हा । याइन्द्रे ण

१र २र१   २   १   ३   ५
सयावरीर्वृ । ष्णोमार३दा । तिशो२ । भा२३४था ॥(१)

३र ४ १ ४ ५र   ३ २   ३र ४र ५   १   १र
ताअस्यपृश्नना । युवा३४औहोवा । सोमंश्रीण । ति

१ ७   ५ ५   २ १र   २ र १ १र १
पार्श्वया२३४ः । ओ६हा । प्रियाइन्द्रस्यधेनवोव । ज्रां

२   १   ३   ५   ३र ४ २
हा२३यिन्वा । तिसा२ । या२३४काम् ॥(२) ताअस्यन

४ ५र   २ २   ३र ५र ५   १ १   १ ०
मसा । सहा३४औहोवा । सापर्यन्ति । प्रचायितसा

५ ५   २ १र   २ र   १   २
२३४ः । ओ६हा । व्रतान्यस्यसश्चिरेपू । रूणा२३यिपू ।

३   ५   १ र   २ २   १
वर्चा२यि । ता२३४यायि । वस्वीरनुस्वा३रा । ज्यायि ।

३   ५र र   ३   ५
जा२या२३४औहोवा । वा२३४सू(३) ॥ ४ * ॥ [१] १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य
पञ्चमः खण्डः† ॥ ५ ॥

---

* ऊ० गा० १०प्र० १अ० ४सा० ।

† 'उक्तं माध्यन्दिनं सवनम्'—इति वि० ।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे,* प्रथमतृचे—

प्रथमा।

१ २ ३ १र २र२ १र १र ३ २
असाव्यꣳशुर्मदायाप्सुदक्षोगिरिष्ठाः।
३ २उ ३ १ २
श्येनोनयोनिमासदत्॥ १ †॥

"गिरिष्ठाः" पर्वत-जातः "अंशुः" सोमः "मदाय" मदार्थम् "असावि" अभिषुतः "अप्सु" वसतीवरीषु "दक्षः" प्रवृद्धश्च भवति। किञ्च "श्येनो न" यथा श्येनः पक्षी वेगेनागत्य स्थानमासीदति तद्वदयं सोमः "योनिं" स्वकीयं स्थानम् "आसदत्" आसीदति॥ १॥

अथ द्वितीया।

१ १र २र ३ १ २ ३ २ ३ १र २र १ २
शुभ्रमन्धोदेववातमप्सुधौतन्नृभिःसुतम्।
१ २ ३ २ ३ १ २
स्वदन्तिगावःपयोभिः॥ २ ‡॥

यत् "देववातं" देवैः प्रार्थितं¶ "शुभ्रं" शोभनम् "अन्धः" अन्नस्वरूपं "नृभिः" नेतृभिः "सुतम्" अभिषुतम् "अप्सु"

* 'इदानीं तृतीय-सवनमुच्यते'—इति वि०।

† ऋ० आ० ५, २, ४, ७ (२आ० ३३५०)=ऋ० वे० ७, १, २४, ४।

‡ ऋ० वे० ७, १, २४, ५।

¶ 'देववातं—देवानां भक्षणीयम्'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वसतीवरीषु "धौतं" शोधितं सोमं "गावः" पशवः "पयोभिः" आशिरैः "स्वदन्ति" स्वादयन्ति ॥

"धौतंसुतं"-"धूतःसुतः"—इति पाठौ ॥ १ ॥

अथ तृतीया।

२ ३ २ ३१र २र ३१ २ ३१२
आदीमश्वन्नहेतारमशूशुभन्नमृताय।

२३१२ ३१२
मधोरसꣳसधमादे ॥ ३ * ॥ १६

"आत्"† अनन्तरं "हेतारं" प्रेरकम्‡ "ईम्"¶ एनं "मधोः" मधुरस्य सोमस्य "रसं" "सधमादे" यज्ञे "अमृताय" अमरणाय "अशूशुभत् ऋत्विजः शोभयन्ति। तत्र दृष्टान्तः— "अश्वं न" यथा प्रेरका अश्वं सङ्ग्रामे शोभयन्ति तद्वत् ॥

"हेतारं"--"हेतारः"—इति पाठौ, "मधोः"-"मध्वः"— इति च ॥ ३ ॥ १६

१ २ १ २
॥ सन्तनि ॥ असाहाउ। वायाꣳशुर्मा३१उवा२३।

५ २ १ र २ ३२ र २ १
दा२३४या। अꣳसुदत्तोगिरिष्ठा१ः। श्येनोहाउ। ना

र १ ५ २१
योनिमा ३१ उवा २ ३। सा २ ३ ४ दात् ॥(१) शुभ्रम

---

* ऋ० वे० ७, १, २४, १।

†, ¶ "आत्"—"ईम्"—इत्येतावुपसर्गौ—इति वि०।

‡ 'हेतारं—शीघ्रगामिनम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र १ र २ १२र १ २ ३ २ २ १
मन्धोदेववातमप्सुधौतन्नृभीःसुता१म्। स्वदाहाउ। ता
२ २ ५ १र२र१ २ १
यिगावःपा३१उवा२३। यो२३४भोः॥(२) आदीमश्वन्न
र२र १ र २ १२र ३ ११११ १ २ १
द्वेतारमश्रृण्वभन्नमृतायार२३४५। मधोर्हाउ। रासᳪ
१ ५
सदाधा३१उवा२३। मा२३४दे(३)॥ १० *॥ [१]

१ र २ १ र र २
॥ गौषूक्तम् ॥ असाव्यᳪशुम्मौं। हौहोवाहायि।
र १ २ १ र २ १
हाया। अप्सुदक्षोगिरो२। ऊवायि। ऊवा२यि। ष्ठा२ः।
र १र २ २ १ १
श्येनोनयोनिमौ२। ऊवायि। ऊवा२यि। सादा२३त्।
१ ३ ५र र २ १ र २रर र २
होऽ२वा२३४औहोवा॥(१) शुभ्रमन्धोदेवौ। हौहोवाहा
र १ ११र २ १
यि। वाताम्। अप्सुधौतन्नृभौ२। ऊवायि। ऊवा
१ १ र २ १
२यि। सूता२म्। स्वदन्तिगावःपौ२। ऊवायि। ऊ
१ १ २ ५र र
वा२यि। योभा२३यिः। हो२वा२३४औहोवा॥(२)
१र २र १ २ १ र र १२ र १ र
आदीमश्वन्नहौ। हौहोवाहायि। ताराम्। अश्रृण्व

* ऋ० मा० ९म० १ख० १० सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भन्नमी२। ऊवायि। ऊवा२यि। ताया२। मधोर
स७ंसधौ२। ऊवायि। ऊवा२यि। मादा२३यि।
हो२वार३४औ३होवा। अग्निराऊता२३४५ः(३)॥ १८* ॥[२]

॥ ऐडसंन्धक्षितम्॥ असाव्य७ंशो। हायि। मदा
२३या। अप्सुदक्षोगा१यिरा३यिष्ठाः। श्ये नोनयो२३४
५हायि। नायिमा३हायि। सदात्। औ२३होवा॥(१)
शुभ्रमन्धो। हायि। देववा२३ताम्। अप्सुधौतन्नृभा
१यिःसू३ताम्। स्वदन्तिगो२३४हायि। वाःपा३हायि।
योभायिः। औ२३होवा॥(२) आदीमश्वो। हायि। न
हेता२३राम्। अघ्रूशुभन्नमा१र्त्तो३या। मधोरसो२३
४हायि। साधा३हायि। मादा। औ३होवा।
होपुई। डा(३)॥४†॥[३]

* ऊ० गा० ७प्र० २ख० १९सा०।

† ऊ० गा० १६प्र० १ख० ४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ अध्वर्य्वेडसोमसाम ॥ असाव्यंशुर्म्मदाया ३ ए।
अप्सुदक्षोगिरिष्ठाः। श्येनोनया२३। हायि। नायि
माउवा। सादाउवा३ ॥(१) शुभ्रमन्धोदेववाता३मे।
अप्सुधौतन्नृभिःसुताम्। स्वदन्तिगा२३। हायि। वाः
पाउवा। योभाउवा३ ॥(२) आदीमश्वन्नहेतारा३मे।
अशूशुभन्नमृताया। मधोरसा२३म्। हायि। साधा
उवा। मादाउवा३। ऊ३२३४पा(३) ॥ २ * ॥ [४] १६

अथ प्रगाथरूपे द्वितीय-सूक्ते†—

प्रथमा।

अभिद्युम्नम्बृहद्यशइषस्पतेदिदीहिदेवदेवयम्।
विकोशम्मध्यमंयुव ॥ १ ‡ ॥

हे "इषस्पते" अन्नस्य पते! "देव!" स्तोतव्य सोम! "द्युम्नं" द्योतमानं "बृहत्" प्रभूतं "यशः" अन्नरूपं "देवयु"

* ऊ० गा० २०प्र० २अ० २सा०।

† 'च्यावनं साम'—इति वि०।

‡ छ० आ० ६, २, ४, १ (२भा० १२६पृ०)=ऋ० वे० ७, ५, १८, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



देवान् कामयमानं हविर्लक्षणं त्वदीयं रसम् "अभि दीदिहि" अस्मभ्यमाभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः। [यद्वा, हे सोम! यशोऽन्नं देवयु' देवानिच्छन्तं यजमानमभिलक्ष्य प्रकाशय। आमन्त्रितस्याविद्यमानवत्त्वेन (८,१,१९) पादादित्वादनिघातः। किञ्च "मध्यमम्" अन्तरिक्ष-स्थितं "कोशं" मेघं "वियुव" वृष्ट्यर्थं विगमय विश्लेषय॥

"देवयु"-"देवयुः"—इति पाठौ॥१॥

अथ द्वितीया।

१ २ ३ ३ २र ३ २ ३ १उ २ २ ३ १ २
आवच्यस्व सुदक्षचम्वोः सुतोविशांवह्निर्नविश्पतिः।
३ २ ३ १ २ ३ १ २ ३ १उ ३ १ २ ३ १ २
वृष्टिन्दिवःपवस्वरीतिमपोजिन्वन्गविष्टयेधियः॥ २ *॥ १७

हे "सुदक्ष" शोभन-बल! "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः त्वं "वह्निः न विश्पतिः" सर्वासां प्रजानां वोढ़ा राजेव "विशां" प्रजानां वोढ़ा सन् "आ वच्यस्व" आगच्छ कलशमापवस्व [वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपम्! किञ्च त्वम् "अपः" अपाम् उदकादीनां "रीतिं" व्याप्तां गतिं वृष्टिं "दिवः" द्युलोकात् "पवस्व" कुरु। किं कुर्वन्? "गविष्टये" गामात्मन इच्छते यजमानाय "धियः" कर्माणि "जिन्वन्" प्रेरयन्॥

"अपोजिन्वन्"-अपाञ्जिन्व"—इति पाठौ॥२॥१७

---

* ऋ० वे० ७, ५, १८, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ च्यावनम् ॥ अभा२३४यि । द्यु म्नम् । बृहा२३४ द्यशा६ः । हाउ । आयिषस्पा२३४तायि । दिदीहिदेव देवायू२३४ऽहायि । वायिकोशा३म्मा३ । ध्यामा२३ऽ हा३४३यि । यू२३४वो६हायि ॥(१) विक्रो२३४ । ग्रम्म । ध्यमा२३४युवा६ । हाउ । आवच्या२३४स्वा । सुदक्ष चमुवोःस्तो२३४हायि । वायिशांवा२क्का३यिः । नावा२३ हा३४३यि । ध्या २ ३ ४ तो६हायि ॥(२) विश्मा२३४म् । वक्रिः । नवा२३४यिश्पतोर्६ः । हाउ । वार्ष्टि न्दा२३४यि वाः । पवस्वरीतिमापो२३४हायि । जायिन्चान्गा३वा३यि । ष्टाया२३हा३४३यि । धा२३४यो६हायि(३) ॥ ११ * ॥ [१]

॥ ऐषिरम् ॥ अभिद्यु म्नम्बृहद्या३शाः । आयिषस्प ते । दायिदी१हायिदे२ । वादा१यिवायू२म् । वायि

---

* ऊ०गा० ३प्र० १अ० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



को१ग्नाम्मा२३ । ध्यमोवा । यू५वो६हायि ॥(१) विको
ग्नम्मध्यमंयू३वा । आवच्यस्व । सूदत्ताचा२ । मूवो१:
सुता२: । वायिग्ना१वाक्षा२३यि: । नवोवा । ध्या५तो
६हायि ॥(२) विग्नांवक्किर्न्नविश्पा३ती: । वाष्टिन्दिव: ।
पावस्वारी२ । तायिमा१पा२: । जायिन्धा१न्गावा२३
यि । ष्टयोवा । धा५यो६हायि(३) ॥ १ * ॥ [२]

॥ सफम् ॥ अभिद्यु३म्नम्बृ । हद्या२३४शा: । इष
स्पतायिदी२ । दीह्विदायिवा३दा३यि । वा३२३४यूम् ।
विको । ग्नम्माध्या३मा३म् । यू३४५वो६हायि(१)॥ १२ †॥[३]

॥ वाच:साम ॥ अभिद्युम्नाम् । हायि । बृहद्यशा
६ए । आयिषस्पते । दायिदी१हायिदे२ । वादेवयुम् ।

---

* ऊ० गा० ५प्र० १अ० १सा० ।

† ऊ० गा० ९प्र० १अ० १३सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ ४ २ ५
वायिकोऽ१श्राम्मा२३ । ध्या२३मा३म् । यू३ ४ ५ वो ६ हा

३ ४र ५ ० ३ ४ ५ ५ १ २
यि ॥ (१) विकोश्रम्मा । हौ । ध्यमंयुवा६ए । आवच्य

१० १र २ १ २०
स्व । स्वदत्राचा २ । मूवो:सुत: । वायिश्रा१वाक्रा २ ३

१ ४ २ ५ ३ ४र
यि: । ना२३वा३यि । ध्या३४५तो६हायि ॥ (२) विशा

५ २ ३ ४ ५ ५ १ २ १ ०
वक्री: । हौयि । नविश्पता६ए । वार्ष्टिन्दिव: । पाव

१ २ १ २ १
स्वारो २ । तायिमप: । जायिन्वा१न्गावा२३यि । ष्टार

४ २ ५
३या३ । धा३४५योई६हायि (३) ॥ १४ *॥ [४] १७

अथ तृतीय-तृचे*—

प्रथमा ।

३ १र २र३ १ २ ३ २ ३ २ ३ १ २
प्राणाशिशुर्महीनाᳲहिन्वन्नृतस्यदीधितिम् ।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
विश्वापरिप्रियाभुवदधद्विता ॥ १ †॥

---

* ऊ० गा० १४प्र० २अ० १४सा० ।

* 'क्रौशं साम'—इति वि० ।

† ऋ० आ० ६, १, ३, ५ ( २भा० २१२पृ० ) = ऋ० वे० ७, ५, ४, १ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्राणा" ते [अनितेः शानचि "बहुलञ्छन्दसि (२,४,७३)" —इति विकरणस्य लुक्, "सुपां सुलुग् (७,१,३९)"—इति सुप-आकारादेशः ] यज्ञस्य प्रापयिता चेष्टयिता "महीनां" महतीनां महनीयानां वा अपां "शिशुः" पुत्र-स्थानीयः सोमः "ऋतस्य" यज्ञस्य "दीधितिं" प्रकाशकं धारकं वा स्वीयं रसं "हिन्वन्" प्रेरयन् "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परिभुवत्" परिभवति व्याप्नोति। "अध" अपिच "द्विता" द्विधा भवति दिवि च पृथिव्याञ्च वर्त्तत इत्यर्थः॥

"प्राणा"-"क्राणा"--इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३१ २ ३ २ १ २ ३ १र २र ३ २

उपत्रितस्यपाष्योऽ३ऽरभक्तयद्गुहापदम्।

३ १ १ ३ १र २र ३ १ २ ३ २

यज्ञस्यसप्तधामभिरधप्रियम्॥ २*॥

"त्रितस्य एतन्नामकस्य ऋषेस्तोतुर्मम यज्ञे "गुहा" गुहायां हविर्धाने वर्त्तमानयोः "पाष्योः" पोषणवद्दृढयोः अधिषवण-फलकयोः "पदं" स्थानं सोमः "यत्" यदा "उप अभक्त" समभजत। "अध" अनन्तरं "यज्ञस्य" "धामभिः" च धारकैः "सप्त" सप्तभिच्छन्दोभिः गायत्र्यादिभिः "प्रियम्" प्रीणयितारं सोमम् "अभि" ष्टुवन्ति ऋत्विजः [ अपि वा सप्त सर्पणशीलैर्वसतीवर्यादिभिरुदकैः सोममभिषुण्वन्ति॥ २॥

* ऋ० वे० ७, ५, ३, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १र २र २ २
त्रीणित्रितस्यधारयापृष्ठेष्वैरयद्रयिम्।

२ २ ३ १ २ ३ २ ३ १ २
मिमीतेअस्ययोजनाविसुक्रतुः॥ ३* ॥ १८

सोमः "त्रितस्य" मम यज्ञस्य सम्भूतानि "त्रीणि" सवनानि धारया आत्मीयया "वि धारया"। किञ्च पृष्ठेषु" सामसु "रयिं" दातारमिन्द्रम् "ऐरयत्" आयमतु "सुक्रतुः" शोभन-यज्ञः स्तोता "अस्य" इन्द्रस्य "योजना" संयोजनादीनि स्तोत्राणि "वि मिमीते" करोति† यस्मादेवं तस्मादिन्द्रं सामसु प्रेरयत्वित्यर्थः॥

"ऐरयत्"—"एरया"—इति पाठौ॥ ३ ॥ १८

२र १ र २र १
॥ओश्म्॥ प्राणा। शिशुर्म्महो। नाम्। हो

१ २र १ र
ई२। हो। वाहोयि। हिन्वन्नृतस्यदीधितायिम्।

२ १ २ २ १ १ २ १ २
विश्वापा१रा२३यि। प्री३याभू३वात्। अधा २ ३ हिता

२ १ र २र १ १
३४३॥(१) उपा। त्रितस्यपा। ष्योः। होई२। हो।

---

* ऋ० वे० ७, ५, ४, ३।

† 'विमिमीते'--मा माने, मानं करोति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ र २१ १
वाहोयि । अभक्तयद्गुहापदाम् । यज्ञास्या१सा २३ ।

२ १ २ २ १ २ २र१
:प्ता३धामा३भायि । अधा२३प्रिया३४३म् ॥(२) त्रीणी ।

र २र १ १ २र२ र
त्रितस्यधार । या । होई२ । हो । वाहोयि । पृष्ठे

२ १ २ २ १ २२
ष्वैरयद्रयायिम् । मिमायिते१आ२३ । स्या३योजा३ना ।

१ २ १
विसू२३क्तद्व३४३: । ओ२३४५ई । डा(३) ॥ १२*॥ [१]

२र र १ १ १
॥ त्रैतम् ॥ प्राणाशिशुर्महायिनाम् । हिन्वन्नृतस्य

र २ र र ऽ१ ५ १
दीधितायिम् । विश्वापरिप्रिया३भूवो२३४हायि । आ२

२ ५र र २ १ २ १ १ १ १ २
धा२३४औहोवा । ए३ । दिता२३४५ ॥(१) उपत्रितस्य

र १ २ १ र २ १ ऽ १
पाषायो: अभक्तयद्गुहापदाम् । यज्ञस्यसप्ताधा३माभी

५ १ २ ५र र २ १ ३ १ १ १ १
२३४हायि । आ२धा२३४औहोवा । ए३ । प्रिया२३४५

२र र १ २ १ र र
म् ॥(२) त्रीणित्रितस्यधाराया । पृष्ठेष्वैरयद्रयायिम् ।

---

* ऊ० गा० ३प्र० १ख० ११गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ ३ ३ २ १ ५ १ २ ५ ३ ३
मिमीतेअस्ययो३जाना२३४हायि। वा२यिस्२३४औहो

२ १ ३ १ १ १ १
वा। ए३। क्रतू२३४५ः (३) ॥ २* ॥ [२]

२३ ३ १३ २
॥ सुज्ञानम् ॥ प्राणाशिशूः। महीनाम्। हिन्व

१ ३ २ ३ १ १३
न्नार्त्ता२। स्यदीधितायिम्। विश्वापारा२यि। प्रिया।

३ ५३ ३ १ २ २
भू२वा२३४औहोवा। अधद्वितए३ ॥ (१) उपत्रिता। स्य

१ १ २ १ ३ १ २ १
पाषियोः। अभक्तायार२त्। गुहापदाम्। यज्ञस्यासा

१३ ३ ५३ ३ १ १
२। प्तधा। मा२भा२३४औहोवा। अधप्रियमे३ ॥ (२)

२३ ३ १ २ ३ १ १
त्रीणित्रिता। स्यधारया। पृष्ठेषूवा२यि। रयद्रया

२ ३ १ १३ ३ ५३ ३
थिम्। मिमीतेआ२। स्ययो। जा२ना२३४औहो

१ २ १ १ १ १ १
वा। विसुक्रतुरे३उणा२३४५ (३) ॥ २०† ॥ ३]

२३ २ २ २ ५
॥ दैवोदासम् ॥ प्राणा३१। शिशू३१२३४ः। म।

१ २ २ २ २ १ ५३
हा३यिनाम्। हिन्वा३१न्। ऋता३१२३४। स्यदी।

---

* ऊ० गा० ४प्र० १ख० २सा०।

† ऊ० गा० ७प्र० २ख० २०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ३ २ ३२ ५र
धा३यितायिम्। विश्वा३१। परा३१२३४यि। प्रिया।

२ र ३ ० ३ २ १ ५ ३ २
भू३वात्। अधा३१। द्विता३। ओ२३४वा॥(१) उपा

३ २ ५र २ २ ३ २
३१। त्रिता३१२३४। स्यपा। षा३र्योः। अभा३१।

३ २ ५र २ २ ३२ २
क्तया३१२३४त्। गुहा। पा३दाम्। यज्ञा३१। स्य

२ ५र २ २ ३२ ३ २
सा३१२३४। प्रधा। मा३भायिः। अधा३१। प्रिया३

१ ५ ३र २ ३ २
म्। ओ२३४वा॥(२) त्रीणी३१। त्रिता३१२३४। स्य

५र २ २ ३ २ २२ ५
धा। रा३र्या। पृष्ठा३१यि। ध्रुवा३१२३४यि। रयत्।

२ २ ३ २ ३र २ ५ र
रा३यायिम्। मिमा३१यि। तेश्रा३१२३४। स्यायो।

२ ३ ३२ ३ २ १ ५ २
जा३र्ना। विमू३१। क्रतू३ः। ओ२३४वा। ऊ२३४

५
पा(३)॥ २१*॥ [४]

१र र र २ २ १२
॥अध्यम्॥ प्राणाग्निशू२र्मं। द्वीनोवा। द्विन्वन्न

१ २ ३र २ १ २र १ २१र २ १
ता। स्यदीधितायिम्। विश्वापरिप्रियाभुवद। धार

* ऊ० गा० ७प्र० २ख० २१सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र १ १ १
३। ह्निताउवा। अूधिया२। ए२३हियाउ३४३। ओ२ ३४५ई। डा(१)॥ १४*॥ [५]

१र १र २ ५ १ २ ५
॥ पौष्कलम्॥ प्राणाञ्चा३यिष्नुः। मा२हा२३४यिनाम्।

१ १ २ १ २ २ ५ २ १
ह्निन्वानृता। स्वादायिधी२३४तीम। विश्वापरायि।

७ ३ २ १ ३ १ १ ११ २ १ १
प्रियार्२भ२३४५वा६५६त्। अधह्निता२३४५॥(१) उपत्री३ तस्य। पाषा२३४यो:। अभाक्तयात्। गूह्णपा२३४ दाम्। यज्ञास्यसा। प्रधा२मा२३४५भा६५६यिः। अ धप्रिया२३४५म्॥(२) त्रीणित्री३तस्य। धारा२३४या। पृष्ठायिषुवायि। रायद्रा२३४यायिम्। मिमायिते‍त्रा। स्ययो२जा२३४५ना६५६। विमुक्तू२३४५:(३)॥ २*॥ [६]

॥ ऋध्यम्॥ प्राणाशिशू२र्म्म। ह्नीनोवा। ह्निन्वन्नृ ता। स्वदीधितायिम्। विश्वापरिप्रियाभुवद। धार३।

---

* ऊ० गा० ९प्र० १ख० १४सा०।

† ऊ० गा० ९प्र० ३ख० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्विताउवा । ऊधिया२ ॥(१) उपच्चिता२स्य । पाषियो

वा । अभक्तयात् । गुहापदाम् । यज्ञस्य सप्तधाममि

र । धार२३ । प्रियाउवा । ऊधिया२ ॥(२) त्रीणित्रि

ता२स्य । धारयोवा । पृष्ठेषुवायि । रयद्रयायिम् ।

मिमीतेअस्ययोजनावि । सू२३ । क्रताउवा । ऊधि

या२ । ए२३हियां३४३ । ओ२३४५ई । डा(३) ॥ ५*॥ [७]

॥ वारवन्तीयोत्तरम् ॥ प्राणाग्निशाऔहोहायि । मा

हा२३४यिनाम् । हिन्वाना२३४हा । तस्यदीधितिंविश्वा

पा३४ । औहोवा । इहा२३४हायि । उडुवा२३४रायि ।

प्रियाभु । वाद्धहा३४ । औहोवा । इहा२३४हायि ।

औहो३१२३४ । ता । एहियाहहा ॥(१) उपच्चिताऔ

होहायि । स्यापाषा२३४यो:। अभाक्ता२३४हा । यद्गुहा

* ऊ० गा० ११प्र० १ख० ५गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पदंयज्ञस्या३४। औहोवा। इहा२३४हायि। उङ्वा२
३४सा। प्रधाम। भायिरधप्रा३४। औहोवा। इहा
२३४हायि। औहो३१२३४। याम्। एहियाऽहा॥(२)
त्रीणित्रिताऔहोहायि। स्याधारा२३४या। पृष्ठायिषू
२३४हायि। ऐरयद्रयिम्मीता३४। औहोवा। इहा
२३४हायि। उङ्वा२३४आ। स्ययोज। नाविसुक्रा३
४। औहोवा। इहा२३४हायि। औहो३१२३४। तूः।
एहियायाऽहा। होऽ५इ। डा(३)॥ ८* ॥ [८]

॥ वार्शम्॥ प्राणाशिशूः। माहा३ यिनाम्। हि
न्वन्नृतस्यदीधि। तायिम्। विश्वा२पा२३४रायि। प्रि
याभुवा३त्। ई३या। अध। द्वा२यिता२३४औहोवा॥(१)
उपत्रिता। स्यपाषा३योः। अभक्तयज्ञहाप। दाम्।

* ऊ० गा० १५प्र० २अ० ८सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



७ ३ ५ १ र २ ५ १ १
यज्ञा२स्या२३४सा । प्राधामभा३यिः । ई३या । अध ।
२ ५र र २र १ २ १
प्रा२या२३४औहोवा ॥(२) त्रीणित्रिता । स्यधारा३या ।
१र र ७ २ ५ १ र
पृष्ठेषे२यद्र । यायिम् । मिमा२यिते२३४आ । स्यायो
२ २ २ १ २ ५र र २
जना३ । ई३या । विसु । क्रा२तू२३४औहोवा । ऊ
५
२३४पा(३) ॥ ८* ॥ [९] १८

अथ चतुर्थ-तृचे†—

प्रथमा ।

१ २ ३१ २ ७ २ ३ १ २ ३ १
पवस्ववाजसातये पवित्रेधारयासुतः ।
१ २ ३ १ २ २ ३ ३ १ २
इन्द्रायसोमविष्णवेदेवेभ्योमधुमत्तरः ॥ १‡ ॥

हे "सोम !" "सुतः" अभिषुतः त्वम् "इन्द्राय" "विष्णवे" च अन्येभ्यो मित्रादिभ्यः "देवेभ्यः" "मधुमत्तरः" अतिशयेन माधुर्य्योपेतः सन् "वाजसातये" अन्न-लाभाय "पवित्रे" "धारया" "पवस्व" क्षर ॥

---

* ऊ० गा० १६प्र० २अ० ८सा० ।

† "गौरीवितं साम"—इति वि०

‡ ऋ० वे० ७, ४, २८, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वाजसातये"-"वाजसातमः"—इति पाठौ, "मधुमत्तरः"-"मधुमत्तमः"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३१ ३१ २३ १२ ३१२
त्वाᳪरिहन्तिधीतयोहरिम्पवित्रे अद्रुहः।
१ २ ३ २उ ३ १३ १२ ३ १२
वत्सञ्जातन्नमातरःपवमानविधर्मणि ॥ २* ॥

हे "पवमान" पूयमान सोम! "वि धर्मणि" विविधं हविषां धारके† यज्ञे "अद्रुहः" द्रोह-वर्जिताः "धीतयः" अङ्गुलयः [धीतय इति अङ्गुलिताम (निघ० २,५,७)] "हरिं" हरित-वर्णं "पवित्रे" स्थितं "त्वां" "रिहन्ति" लिहन्ति निष्पीड़नार्थं स्पृशन्तीत्यर्थः। तत्र दृष्टान्तः—"वत्सं जातं न मातरः"; 'मातरः' मातृ-भूता गावः उत्पन्नं 'वत्सं' यथा 'लिहन्ति' तद्वत् ॥

"धीतयः"-"मातरः"—इति पाठौ, "मातरः"-"धेनवः"—इति च ॥ २ ॥

अथ तृतीया।

१२ २२ ३१२ २२
त्वन्द्यांश्चमहिव्रतपृथिवींश्चातिजभ्रिषे।
१ २३ १२ ३ १२ ३ २
प्रतिद्रापिममुञ्चथाःपवमानमहित्वना ॥ ३‡ ॥ १९

* ऋ० वे० ७, ४, २८, २।

† 'विविधे कर्मणि'—इति वि०।

‡ ऋ० वे० ७, ४, २८, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "महिव्रत" महाकर्मन् सोम! "त्वं" "द्यां" द्युलकं "पृथिवीं च" "अति जभ्रिषे" अत्यन्तं बिभर्षि [ डुभृञ् धारण पोषणयो: (त०उ०), तस्य छान्दसे लिटि ( ३,४,६ ) सर्वविधीनां छन्दसि वैकल्पिकत्वात् अत्र इडागम:। अन्तरिक्षे सोमात्मना,- पृथिव्यां लता-रूपेणेति एवं लोकद्वयवर्त्तित्वम् ]। हे "पवमान" क्षरन्! त्वं "महित्वना" महत्त्वेन युक्त: सन् "द्रापिं" कवचं* "प्रति अमुञ्चथा:" प्रतिमुञ्चसि संवृणोसि॥ ३ ॥ १९

५ ३ २ ४ र ५
॥ गौरीवितम् ॥ पव। स्ववा३। जसातयायि।

१र र र १ र २ ४
पवित्रे धारयासुता२३:। आयिन्द्रायसो३१२३। मवा

१ र र २ ४ ५ ४
पुयिष्णवायि। दायिवेभ्योमा३१२३। धुमोवा। ता५

५ ५ र ३ २ ४ र ५ १
रो६हायि॥(१) तुवाम्। रिद्दा३। तिधीतया:। ह्व

र १ र र ४
रिम्पविचेअद्रुहा:। वात्मञ्ज्ञाता३१२३म्। नमा५तरा:।

१ र २ ४ ५ ५ ५
पावमाना३१२३। विधोवा। मा५णो६हायि॥(२) तु

३ २ ४ ५ १ र र
वम्। द्याञ्चा३। महिव्रता। पृथिवीञ्चातिजभ्रिषा२३

---

* 'द्रापिं—दातव्यम् *** केषां? यजमानानाम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र १ २ १ र २
यि। प्रातिद्रापा३१२३यिम्। अमू५चथाः। पावमाना
४ ५ ४ ५
३१२३। मद्दोवा। त्वा५नो६द्दायि(३)॥ १३॥ [१]

२ १ २ १ २
॥ पार्थम्॥ औ३हो३होयि। पव। स्ववा२। ज
२ ३ ५ २ १र २ २ ३ ५
सांता२३४यायि। पवि। त्रे धा२। रयासू२३४ताः।
२र १ ३२ ३ ५ १ रर १
इन्द्रा। थसौ२। मवायिष्णा२३४वायि। देव। भ्यो
३ ४ १र १
मा२३। धुमा३न्ता५रा६५६ः॥(१) तुवाम्। रिहा२।
३२ ३ ५ २ १ २ र२३
तिधायिता२३४याः। हरिम्। पवा२यि। त्रे अद्रू२३
५ १ १र ३२३ ५ २
४हाः। वत्सम्। जाता२म्। नमाता२३४राः। पव।
१र २ ४ २ १र
माना२३। विधा३र्म्मा५णा६५६यि॥(२) तुवम्। द्या
३२१ ५ २ १र ३२३
श्चा२। महित्रा२३४ता। पृथि। वीश्चा२। तिजभ्री
५ २ १र ३२३ ५
२३४षायि। प्रति। द्रापा२यिम्। अमुचा२३४याः।
२ २ २ १र २
औ३हो३होयि। पव। माना२३। महा३यित्वा५ना
६५६(३)॥ १४†॥ [२]

* ऊ० गा० ३प्र० १अ० १३सा०।

† ऊ० गा० ३प्र० १अ० १४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ रयिष्ठम्॥ पवस्ववा। जसातात्र्यायि। औऽहो

ऽवा। इन्द्रायसोमविष्णवा२३४५यि। इन्द्रायसो।

मवायिष्णाऽवायि। औऽहोऽवा। देवेभ्योमधुमत्तरा२

३४५ः। देवेभ्योमा। धुमात्ताऽराः। औऽहोऽवा॥(१)

तुवाꣳरिहा। तिधायिताऽयाः। औऽहोऽवा। हरि

भ्यविन्ने अद्रू हा२३४५ः। हरिभ्यवायि। न्ने आद्रू ऽहाः।

औऽहोऽवा। वत्सञ्जातन्नमातरा२३४५ः। वत्सञ्जा

ताम्। नमाताऽराः। औऽहोऽवा। पवमानविधर्म्म

णो२३४५। पवमाना। विधर्म्माऽणायि। औ ऽ हो ऽ

वा॥(२) तुवन्द्याञ्चा। महायिन्नाऽता। औ ऽ हो ऽ

वा। पृथिवीञ्चातिजभ्रिषा२३४५यि। पृथिवीञ्चा। ति

जाभ्रीऽषायि। औऽहोऽवा। प्रतिद्रायिममुञ्चथा२३

४५ः। प्रतिद्रापायिम्। अमूञ्चाऽयाः। औऽहोऽवा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र १ २ ३ १११ १ १ २र ३ २ २ १
पवमानमहित्वना२३४५। पवमानमहित्वना१। पवमाना।
१ २ २ ५ २ २ ५ २ २ ५ ३
महायित्वा३ना। औ३हो३वा। औ३हो३वा। ई३या।
५ २ ५ २ २ ५
ई३या ३ ४। हा। हाउवा३। ऊ३२३४पा(४) ॥१*॥ [३]
५ ३ २ २ २
॥ द्विरभ्यस्तत्वाष्ट्रीसाम ॥ पव। स्ववा३। हा३हा।
३ २र १ ५ १र २ २ २ २ २र
जसातायार३४यि। पवि। त्रधा३। हा३हा। रया
१ ५र ३ २ १ २ १ २ १
सूता२३४ः। इन्द्रा। यसो३। हा३हा। मविष्णार
र ५र ३र २ १ २ ३ २ १
३४यि। देवे। भ्योमा३। हा३हा। धुमा३हो२३
५ ४ ५ ५र ३ १
४। वा। ता५रो६ हायि ॥(१) तुवाम्। रिहा ३।
२ २ ३ १र १ ५ ३ १ १
हा३हा। तिधीतायार२३४ः। हरिम्। यवा३यि। हा
२ ३र २ १ ५ १र २ २
३हायि। त्रअद्रूहा२३४ः। वत्सम्। जाता३म्। हा
२ ३ १र १ ५ ३र २ १ २
३हायि। नमातारा२३४ः। पव। माना३। हा३हा
३ २ १ ५ ४ ५ ५
यि। विधा३हो२३४। वा। मा५णो६यायि ॥(२) तुव

---

* ऊ० गा० ८प्र० १ख० १मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



म्। द्याश्वा३। हा३हा। महिव्रातार२३४। पृथि। वौश्वा३। हा३हा। तिजभ्रीषा२३४यि। प्रति। द्रा पा३यिम्। हा३हायि। अमुश्वाथा२३४ः। पव। मा ना३। हा३हायि। महा३हो२३४। वा। त्वा५नोई हायि(३) ॥ ६* ॥ [४]

॥ श्यावाश्वम् ॥ पवा ३१। स्वा३वा। जसा। ता ३ये। एहिया। पा। विश्वेधारा। या। सुतारः। एहिया२। इन्द्रायसोमा३वा३यि। श्वा२३४वायि। ऐ हा२यि। एहिया२। देवेभ्योमाधू३मा३। ता२३४४रो ईहायि ॥(१) तुवा३१म्। रा३यिद्द। निधी। ता२३ः। एहिया। हा। रिम्यविश्वे। अ। द्रुहा२ः। एहि या२। वत्सञ्ज्ञातान्नो३मा३। ता२३४राः। ऐहा२



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यि। एँहिया२। पवमानावा३यिधा३। मा३४५णो६

हायि ॥(२) तुवा३१म्। द्या३च्च। मह्नि। व्रा३त।

एहिया। पा। थिंवीश्चातायि। ज। भ्रिषा२यि।

एहिया२। प्रतिद्रापायिमा३सू३। चा२३४थाः। ऐ

हा२यि। एहिया२। पवमानामा३हा३यि। त्वा३४५

नोई्हायि(३) ॥ १८* ॥ [५]

॥ आन्धीगवम् ॥ पवस्ववाजसा१तायायि। पवित्रे।

धारा२३या। ऊम्मा२१ऽ२। सुतइन्द्रायसोमविष्णवा२

३४५यि। दायिवा३उवा। भ्यो२मा। धूर३मा। त

रा। औ३होवा ॥(१) त्वाँरिहन्तिधा१यितायाः। ह

रिम्प। वित्र२३आ। ऊम्मा२१ऽ२। द्रुहोवत्सञ्जातन्न

मातरा२३४५ः। पावा३उवा। मा२ना। वा २ ३ यि

* ऊ० गा० १५प्र० २अ० १९सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ४ ५ १
धा । मणा । औ३होवा ॥(२) त्वन्द्याश्चमद्दा १ यिव्रा

२ १ र र २ १ १
ता । पृथिवीम् । चाता२३यिजा । ऊम्मा२१२२ । भ्रि

र २र १ २ २ १११ १ १ २ २ १
षेप्रतिद्रापिममुञ्चथा२३४५: । पावा३उवा । मा२ना ।

२ १ १ ४ ५ ४
मा२३हायि । त्वना । औ३होवा । हो५ई । डा(३) ।

॥ २०* ॥ [६]

२ १ ४र ५ २र ३ ५
॥ आकूपारे ॥ पवस्वा२३वाज । साता२३४यायि ।

१ १र २र १ २ र २ १
पवा२यिस्वधा । रयासुता: । इन्द्रायासो२ । मविष्ण

१र२१र १ ४ २ १
वायि । देवेभ्योमा२३ । धू२३मा३ । ता३४५ रो६हा

१ १र ४ ५ २र ३ ५ १
यि ॥(१) तुवा२रा२३यिहन्ति । धीता२३४या: । हरा

१ २र १ २ १ र १
२यिम्पवायि । चे अद्रुहा: । वत्सञ्जाता२म् । नमात

२ १ १ ४ २ ५
रा: । पवमाना२३ । वा२३यिधा३ । मा३४५णो६हा

२ १ ४ ५ २ ३ ५ १
यि ॥(२) तुवन्द्या२३श्चम । दिव्रा२३४ता । पृया२यि

* ऊ० गा० १५प्र० २ख० २०गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ १ १ १
वीश्वा । तिजश्चिषायि । प्रतिद्रापा२यिम् । अमुश्व

२ १ १ ४ २ ४
थाः । पवमानार३ । मार२३हाइयि । त्वा३४५नोई३हा

यि(३) ॥ २१* ॥ [७]

२ १र २ १
॥ आत्रेयम् ॥ पवस्ववा । जसाताऽ२३गायि । पा

२र १र २ १र २ १र र र
विन्नेधा । रयासू२३ताः । इन्द्रायसो । माविष्णावा२

१र १ २ ४ ५ ५
यि । देवेभ्योऽ३मा३ । धुमोवा । ता५रोई३हायि ॥ (१)

२ र १र २ १ २ १ २र १
तुवाः०रिहा । तिधीता२३याः । हारिपवि । त्रेअद्र

२ १ र ७५ १ २ २
२३हाः । वत्सञ्जातम् । नामातारा२ः । पवामा३ना२ ।

४ ५ ४ ५ २ र २
विधोवा । मा५णोई३हायि ॥(२) तुवन्द्याश्वा । महित्रा

२ १ ९र १ १ २ १ र
२३ता । पार्थिवीश्वा । तिजश्रीर२३षायि । प्रतिद्रापिम् ।

० १ २ २ ४ ५ ४
आमुश्वाथा२ः । पवामा३ना३ । महोवा । त्वा५नो

५
ई३हायि(३) ॥ १०† ॥ [८]

---

* ऊ० गा० १५प्र० २श्रा० २१सा० ।

† ऊ० गा० १६प्र० १अ० १६सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ३ ४ ३ ४र
॥ यज्ञायज्ञीयम् ॥ पवा॒ऽ५स्व । वा३जा३सा३साता
५ १ र २ १ २ १ १ १ र
यायि । पावित्रेधा । रा३यामृ३ता: । इन्द्रा२य । सो
२ १ २ २ १ २र
मा२३वा । ऊम्मायि । ष्णा३वायि । दायिवेभ्योमधुमा
ऽ१२ १ २ १र र २र
२त्तराउ ॥(१) रास्व । वा॑रिद्दन्तिधीतयोद्दरिम्पवायि ।
२ १ १ २ १ र १ २ १
त्रे३त्राद्र॒३हा: । वत्सा२जा । तन्ना२३मा । ऊम्मायि ।
२ १ १ र ऽ ३ १ २ १
ता३रा: । पावमानविधा २ म्मणाउ ॥(२) णायित्व । व
र र २ २ १ २ १
न्द्याञ्चमद्दिव्रतपृथिवीच्चा । ती३जाभ्री३षायि । प्राता२
१र २ १ २ २ १ र
यिद्रा । पिमा२३मू । ऊम्मायि । चा३था: । पावमान
ऽ ३ २ ऽ१११
मद्दा२यित्वनाउ । वा३४५(३) ॥ ८ ॥ [८]
१ ५ २र१र
॥ त्रासदस्यवम् ॥ पा२३४ । व । स्वा । जासात
१ र५ २र१र
या२३यि । पा२३४ । वि । त्रेधा । रायासुता२३: ।
१ र ५ २र१ १
आ२३४यि । द्रमयसो । माविष्णवा२३यि । दा२३४यि ।

* ऊ० गा० १६प्र० २ख० ८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र ५ ११ २ १ र
वे। ध्योमा। धुमत्तरा३१उ ॥(१) तू२३४। वाम्।
५ २र १र १ ५
रिद्दा। तीधौतया२३ः। द्दा२३४। रिम्। पवायि।
२र १ १ र ५ २र १र
न्वे ग्रद्रू द्दा२३ः। वा२३४। त्मम्। जाताम्। नामा
१ र ५ २र१ २
तरा२३ः। पा२३४। व। माना। वीधर्म्मणा३१उ ॥(२)
१ र ५ २र १ १
तू२३४। वम्। द्याच्चा। माह्विव्रता२३। पा२३४।
र ५ २र १ १
र्थिं। वीच्चा। तीजम्रिषा२३यि। प्रा२३४। ति।
र ५ २र १ १ र ५
द्रापायिम्। आमुच्चथा२३ः। पा२३४। व। माना।
२र १ २ १११११
माह्वित्वना३१उ। वा२३४५(३) ॥ ३* ॥ [१०]

३ ५ र २र ४ ५र २
॥ वषट्कारनिधनम्॥ पवस्ववाजसातये। पवस्वा
४र ५ ४र ५ २ र र १ ७ २
३वाजसातयायि। पवित्रे धारा३यासुता२ः। रयासू१
१र २ २ र १ ७
तार३ः। ओमो३वा। इन्द्रायसोमा३वायिष्णवा२यि।
१ २ १र २ २ ररर १ ७
मवायिष्णा१वार३यि। ओमो३वा। देवेभ्योमध३मात्त

---

७ क० गा० १०म० २ख० ३सा०।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रा२ः। धुमात्ता१रा२३ः। ओम्। ओ२। वा२३४।

औहोवा। ऊ२३८पा(१)॥२*॥[११]

॥ पृष्ठाषाष्ठीयाद्यम्॥ त्वन्द्याश्चमहिव्रता। पृथिवी

श्चातिजभ्री२३षांषि। प्रतिद्रापिमनुच्चा२३थाः। पवमा

२३ना३। मा२। हिन्वा३४औहोवा। ना२३

४५ (३)॥१२†॥[१२] १९

अथ पञ्चम-तृचे‡—

प्रथमा।

इन्दुर्वाजीपवतेगोन्योघा

इन्द्रेसोमःसहइन्वन्मदाय।

हन्तिरक्षोबाधतेपर्यरातिं

वरिवस्कृण्वन्वृजनस्यराजा॥१¶॥

---

* ऊ० गा० २३प्र० २ख० २सा०।

† ऊ० गा० २३प्र० १ख० १२सा०।

‡ 'दाशस्पत्यं साम'—इति वि०।

¶ छ० आ० ६, १, ५, ८ (२भा० १३९५० )=ऋ०वे० ०, ४, १२, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"इन्दुः" चरण-शील: "सोमः" "वाजी" बलवान् "गोन्योघा" गमनशील-नीचीनाग्र-रस-सङ्घातः "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन् सोमः "मदाय" अस्य मदार्थं "पवते" क्षरति। किञ्च "रक्षः" राक्षस-कुलं हन्ति" हिनस्ति। किञ्च "अरातिं" शत्रुं "परि बाधते" परितः संहरति। कीदृशः ? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य "राजा" ईश्विता सोमइति ॥

"अरातिम्"-अरातीः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३१ २ ३१ २   ३२
अधधारयामध्वापृचान

३ १र २र   ३ १ २
स्तिरोरोमपवतेअद्रिदुग्धः ।

२ ३ १ २   ३ १ २ ३ २
इन्दुरिन्द्रस्यसख्यञ्जुषाणो

३ २ ३ १ २   ३ १र २र
देवोदेवस्यमत्सरोमदाय ॥ २* ॥

"अध" अथ अनन्तरं "अद्रि-दुग्धः" ग्रावभिदुग्धोऽभिषुतः सोमः "मध्वा" मदकारिण्या "धारया "पृचानः" देवान् सम्पर्चयन्† "रोम"‡ अवि-रोमभिः कृतं पवित्रं "तिरः"

* ऋ० वे० ७, ४, १३, १ ।

† 'पृचानः—निष्पाद्यमानः'—इति वि० ।

‡ 'रोम—रोमाणि अविमयानि, दशापवित्रस्येत्यर्थः'—इति वि०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तिरस्कृत्य व्यवधायकं कृत्वा "पवते" कलशेषु चरति। किञ्च "इन्द्रस्य" "सख्यं" सखिभावं कर्म वा "जुषाणः" सेवमानो "देवः" द्योतमानः "मत्सरः" मदकरः* "इन्दुः" सोमः "देवस्य" इन्द्रस्य "मदाय" मदार्थं "पवते" चरति ॥ २ ॥

अथ तृतीया।

३ २ ३१ २ ३ २
अभिव्रतानिपवतेपुनानो

३ २ ३ १उ ३१२ ३र २
देवोदेवान्त्स्वेनरसेनपृञ्चन्।

२ ३ १२ ३१र २र ३
इन्दुर्धर्माण्यृतुथावसानो

२३ १ २ ३२ ३ १ २
दशक्षिपोअव्यतसानोअव्ये ॥ ३† ॥ २०

"धर्माणि" धारकाणि "व्रतानि" कर्माणि "ऋतुथा" ऋतोः काले "वसानः" आच्छादयन् "इन्दुः" सोमः "पुनानः" पूयमानः सन् "अभि पवते" कलशानभिलक्ष्य चरति। कीदृशः? "देवः" सङ्क्रीड़नशीलः‡ 'स्वेन आत्मीयेन "रसेन" इन्द्रादीन् "पृञ्चन्" सम्पर्चयन् संयोजयन्¶। तमिमं सोमं

* 'मत्सरः—मदनीयः भक्षणीयो वा"—इति वि०।

† ऋ० वे० ७, ४, १२, २।

‡ 'देवः—सोमः दानादि-गुण-युक्तः'—इति वि०।

¶ 'पृञ्चन्—तर्पयन् प्रीणयन् वा'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"दश" दशसङ्ख्याकाः "क्षिपः"* [अङ्गुलि-नामैतत् (निघ० २,५,२)] कर्मार्थं प्रेर्यंत इति तत्सङ्ख्याका अङ्गुलयः "साती" समुच्छ्रिते† "अव्ये" अवि-भवे पवित्रे "अव्यत" गमयन्ति [यद्वा, तत्र पवित्रे पूयमानं सोमम् अव्यत गच्छन्ति। वी गत्यादिषु (अदा०प०) लङि व्यत्ययेनात्मनेपदम् ॥

"व्रतानि"-"प्रियाणि"—इति पाठौ ॥ ३ ॥ २०

॥ दाशस्पत्यम् ॥ इन्दुरौहोवाहाईया। वाजाउ। वा३। हाउवा। पवतेगोनियोघाउ। वा३। हाउवा। इन्द्रायिसोमः। सहइन्वाउ। वा३। हाउवा३। मा२दा२३४औहोवा। या२३४५। हन्तायिरक्षो। बाधातायिपाउ। वा३। हाउवा३। मा२दा२३४औहोवा। तीर२३४५म्। वरायिवस्कृ। एवन्वृजनाउ। वा३। हाउवा३। स्या२रा२३४औहोवा। जा २ ३

* 'क्षिपः—क्षिप्यन्त इति क्षिपः अङ्गुल्यः,—इति वि०

† 'उच्चे प्रदेशे'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४५ ॥(१) अधीद्धोवाद्धाईया । धाराउ । वा३ । हाउ
वा । यामधुवापृचानाउ । वा३ । हाउवा । तिरोरो
म । पवाताआउ । वा३ । हाउवा३ । द्रा२इद्रू२३४
औहोवा । रधा२३४५: । इन्दूरायिन्द्रा । स्यसाखीया
उ । वा३ । हाउवा३ । जू२षा२३४औहोवा । णा२३
४५: । देवोदायिवा । स्यमात्मराउ । वा३ । हाउ
वा३ । मा२दा२३४औद्धोवा । या२३४५ ॥(२) अभीद्धो
वाद्धाईया । व्रताउ । वा३ । हाउवा । निपवत्तेपु
नानाउ । वा३ । हाउवा । देवोदायिवान् । स्वेना
रासाउ । वा३ । हाउवा३ । ना२पा२३४ औद्धोवा ।
चा२३४५न् । इन्दूर्द्धोम्मी । णियार्क्तथाउ । वा३ । हा
उवा३ । वा२सा२३४औद्धोवा । ना२३४५: । दशाद्धा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २ १ २
यिपो। अव्यातासाउ। वा३। हाउवा३। नोरश्रा

५र र ३ ११११
२३४औहोवा। व्या२३४५यि(३)॥ १५*॥ [१]

२ १ ऽ २ ३र २
॥ सम्पावैयश्वम्॥ ओ३हायि। ओ३हा। ओहा।

१ ऽ २ २ १ र २१र २ २ ४
इया२। ओ३हा३ए। इन्दुर्वाजी। पवते। गोनियो

५ २१रर २१ २ ३ ४ ५ २ १
घाः। इन्द्रेसोमाः। सहइ। न्वन्मदाया। हन्तिर

२ १र २ ३ ४ ५ २ १ २
क्षो। बा३धते। पर्य्यैरातीम्। वरिवस्का। एवा ३

१ २ २ ४ २ १ र
न्वृज। ना३४३। स्या३रा५जा६५६॥(१) अधधारा।

२ १ २ ३ ४ ५ २१रर २१र २
या३मधु। बापृचानाः। तिरोरोमा। पवते। अद्रि

४ ५ २ १ २ १ २ ३ ४ ५
दुग्धाः। इन्दुरिन्द्रा। स्या ३ सखि। यज्जुषाणाः।

२र१रर २१ २ २ ४
देवोदेवा। स्यमत्स। रो३४३। मा३दा५या६५६॥(२)

२ १ २ १ १ २ ४ ५ २रर र २
अभिव्रता। नो३पव। तेपुनानाः। देवोदेवान्। स्वे

१ २ ३ ४ ५ ५ १ २ १ २ ३
३नर। सेनपृचान्। इन्दुर्धर्म्मा। णी३ऋतु। थाव

* ऊ० गा० ९प्र० १अ० १५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ २ १ २ १२ २ १
सानाः। ओ३हायि। ओ३हा। ओहा। इया२।

५ २ १ १ २ १ २ १ ४
ओ३हा३ए। दशतियो। अव्यत। सा३४३। नो३आ

५व्याई५६यि(३)॥ ५*॥ [२] २०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

षष्ठः खण्डः† ॥ ६ ॥

अथ सप्तमे खण्डे,‡ प्रथम-सूक्तम्¶—

प्रथमा।

१ २ ३१ २ ३ १२
आ ते अग्न इधीमहि द्युमन्तं देवाजरम्।

२३ २ ३१२ ३ २ ३ १२ ३१र
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवी

२र ३ २ ३ १ २
षं स्तोतृभ्य आ भर॥१॥

* ऊ० गा० ८प्र० २ख० ५सा०।

† 'यज्ञायज्ञीयमग्निष्टोम साम'—इति वि०।

‡ 'इदानीमुक्थसामानि'—इति वि०।

¶ 'सञ्जयं साम'—इति वि०।

§ ऋ० आ० ५, १, ४, १ (१भा० ८५४१०) = ऋ० वे० ३, ८, २२, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "अग्ने!" "द्युमन्तं" दीप्तिमन्तम् "अजरम्" अजीर्णम् "ते" त्वाम् "आ" सर्वतः "इधीमहि" दीपयामः। "यत् ह" यदा खलु "ते" तव "स्या" सा "पनीयसी" स्तुत्या "समित्" दीप्तिं "द्यवि" द्युलोके "दीदयति" दीप्यते तदा हे अग्ने! "स्तोतृभ्यः" अस्मभ्यम् "इषम्" अन्नम् "आभर" आहर॥१॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २
आते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते।
१ २ ३ २ ३ १ २ ३ १ २३ १ २
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳ हूयत
३ १ २ ३ २ ३ १ २
इषꣳ स्तोतृभ्य आभर॥ २*॥

हे "ज्योतिषस्पते" दीप्तेः स्वामिन् अग्ने! "शुक्रस्य" दीप्तस्य "ते" तुभ्यम् "ऋचा" मन्त्रेण सह† "हविः"‡ "आ" आभिमुख्येन "हूयते"। हे "सुश्चन्द्र" सुष्ठ्वाह्लादक! शोभन-हिरण्य! वा, हे "दस्म" शत्रूणामुपक्षपयितः!। शिष्टं गतम्॥ "ज्योतिषः"--"शोचिषः"—इति पाठौ॥ २॥

---

* ऋ० वे० ३, ८, २२, ५।

† 'याज्यानुवाक्या-लक्षणया'—इति वि०।

‡ 'हविः—चरु-पुरोडाशादि-लक्षणम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१र ३ १ २ २ १ २
आभेसुश्चन्द्रविश्पतेदर्वी श्रीणीषआसनि।
२ २ ३१ २ ३ १ २ ३
उतोनउत्पुपूर्याउक्थेषुशवसस्पत
१२ ३ २ ३ १ २
इषᳬस्तोटभ्यआभर॥ ३*॥ २१

हे "सुश्चन्द्र" शोभनाह्लादक! शोभन-हिरण्य! वा, अग्ने! "उभे" "दर्वी" दर्व्यौ हविः-पूर्णे जुह्वप्रभृती "आसनि" आस्ये "आ श्रीणीषे" आश्रयसि पचसि वा "उतो"¶ अपिच "नः" अस्मान् "उक्थेषु" यागेषु‡ "उत्पुपूर्याः उत्पूरय¶ फलैः। हे "शवसस्पते" बलस्य पालयितः!। इषमित्यादि गतम्॥३॥२१

३र ४र ५ र २ ४ ५
॥ सञ्जयम्॥ आतेअग्नइधी। माइहायि। द्युम
२ ४र५ ४ ५ ३ ४ ३र ४र ३ ४र ५ र ४ ३ ४र ३ ४५
न्ताइन्देवअजरम्। यद्धस्यातेपनीयसी। समिद्दीदयता
ऽ २ ३ ५ ३र ४र५ र
यि। ऊं३। ऊम्। द्या२३४वो॥(१) आतेअग्नऋचा।
२ ४ ५ २ ४र ५४ ५ ३ ४ ३ ४
हा३वायिः। शुक्रस्या३ज्योतिषस्पतायि। सुश्चन्द्रदस्म

* ऋ० वे० ५, ८, २३, ४।

†,¶ 'उत उ—इति पदपूरणः'—इति वि०।

‡ 'उक्थेषु—सामसु'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ४र३४५र ३ ४ ५ ऽ २र १ ५
विश्वतेद्रव्यवाट्तुभ्यꣳहू। ऊ३। ऊम्। या२३४ता

३र४र५ २ ४ ५र२ ४
यि॥(२) ओभेसुश्चन्द्रवि। श्व्या३तायि। दवीश्रा३यि

रर ५ ४५ ५३र४ ३४रर ३र ४५ ऽ
णीषश्रासनायि। उतोनउत्युपूर्व्याउक्थ्युग्रवसा। ऊ३

३ ५ १ र २ २ ऽ
३ऊम्। पा२३४तायि। इषꣳस्तोनृभ्या३श्रा। ऊ३।

२ २ ५
ऊम्३४म्। भा३४५रोईहायि(३)॥ १६ *॥ [१]

१ र५ र ४५
॥ सौगमतम्॥ आ२३४। तेअग्नइधी। माहायि।

२ र १ २३२ १ २ २
द्युमन्तन्देवा३। आ२३। जरमा। यद्वास्या३ता३यि।

१ २ ५ २१ १ २३
पानीर्२या२३४सीं। समिद्दी२दय। ता२३यि। द्यवि

२ १ र५ र ४५ २
या॥(१) आ२३४। तेअग्नऋचा। हावायिः। शुक्र

र १ २३२ १ २ २
स्यज्योती३। षा२३ः। पतश्रा। सुश्चान्द्रा३दा३।

१ २ ५ २१ १
स्नवा२यिम्रपा२३४तायि। द्रव्यवा२ट्तुभ्यम्। ऊ२३।

२३१ १ र५ ४५
यतश्रा॥(२) ओ२३४। भेसुश्चन्द्रवि। ग्पातायि।

---

• ऊ० गा० ३प्र० १ख० १६सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१२ २ २ २२ १ २ ३ २ १ ० २
इवीश्रीणीषे३ । आ२३ । सनिया । उतोना३ऊ३त् ।

१ ३ ५ २ १२ १ २ ३ २
पुपू२रा२३४याः । उक्थेषू२भव । सा२३ः । पतआ ।

१ २ २ १ ४ २ ५
इषाᳬस्तो३तृ३ । भ्या२३आ३ । भा३४ ५ रो ६ हायि ।

॥ ६ * ॥ [१२] २१

अथ द्वितीयस्तृचः—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १
इन्द्रायसामगायतविप्रायबृहतेबृहत् ।
३ १२ ३ १२ ३ १ २
ब्रह्मकृतेविपश्चितेपनस्यवे ॥ १ †‡ ॥

हे उद्गातारः ! "इन्द्राय" "बृहत्" एतन्नामकं साम "गायत" उच्चरत । कीदृशाय ? "विप्राय" मेधाविने "बृहते" महते "ब्रह्मकृते" वृष्टिद्वारा हविर्लक्षणस्यान्नस्य कर्त्रे "विपश्चिते" विदुषे "पनस्यवे" स्तुतिमिच्छते ॥

"ब्रह्मकृते"-"धर्मकृते"—इति पाठौ ॥ १ ॥

* ऊ० गा० १७प्र० १ख० ६सा० ।

† छ० आ० ४, २, ५, ८ (१भा० ७६९ पृ० )=ऋ० वे० ६, ७, १, १ ।

‡ 'महावैश्वामित्रं साम'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१र २र ३१२ ३१र २र
त्वमिन्द्राभिभूरसित्वꣳसूर्य्यमरोचयः।
२ १२ ३१२ ३१ २
विश्वकर्म्माविश्वदेवोमहाꣳअसि ॥ २ * ॥

हे "इन्द्र!" "त्वम्" "अभिभूः" शत्रूणाम् अभिभविता "असि" भवसि" किञ्च "त्वम्" "सूर्यम्" आदित्यम् "अरोचयः" तेजोभिरदीपय,† किञ्च "विश्वकर्मा" विश्वस्य कर्त्तासि "विश्वदेवः" सर्वदेवश्चासि [तथाच यजुर्ब्राह्मणम्—"अग्निं वा अन्वन्या देवता इन्द्रमन्वन्या" इति] अतो "महान्" सर्वाधिकोऽसि ॥२॥

अथ तृतीया।

३ २ ३ १ २३ २ १२ ३ २ ३ २
विभ्राजञ्ज्योतिषास्वाऽ३ऽरगच्छोरोचनन्दिवः।
३ १ २ ३ २ २
देवास्तइन्द्रसख्याययेमिरे ॥ ३‡ ॥ २२

हे "इन्द्र!" त्वं "ज्योतिषा" तेजसा "दिवः" आदित्यस्य "रोचनं" प्रकाशकं अधिकरणत्वेन "स्वः" स्वर्गं "विभ्राजत्" प्रकाशयन् "अगच्छः" अप्राप्नोः, किञ्च "देवाः" सर्वाः "ते" तव

* ऋ० वे० ६, ७, १,२।

† 'त्वं सूर्यमपि दीपयसे'—इति वि०।

‡ ऋ० वे० ६, ७, १, ३।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सख्याय" मित्वाय "येमिरे" स्वं स्वमात्मानं नियमितवन्तः*
अस्माकम् इन्द्रः सखा यथा स्यादिति सर्वे देवाः प्रयत्नमकार्षु-
रित्यर्थः ॥ ३ ॥ २२

२र २१ २ ४ २
॥ सौमित्रम् ॥ औहोहोयि । औ३हो३यि । औ
१ र १र २र ३ १११११ १
३२३४५वा६५६ । इन्द्रा२यसामगायता२३४५ । विप्रा२
२ २ १ १ ११११ १ २ १
यबृहा१त् । ब्रह्मकृते२विपश्चिते२३४५ । ए३ । पनस्य
१११११ १ २र १र ३ ११११ १ र २र
वे२३४५ ॥(१) त्वमिन्द्राभिभूरसौ२३४५ । त्वꣳसूर्य्यमरो
१२१११११ २ १ २र १ र३ ११११ २ २
चया२३४५ः । विश्वकर्म्मा विश्वदेवा२३४५ः । ए३ । म
१र १११११ २ १र२ १र २र १ ११११
हाꣳअसा२३४५यि ॥(२) विभ्राजज्ज्योतिषास्वा२३४५ः ।
१ २र र१ २ २र१र २ १र ११११
अगच्छोरोचनन्दिवा१ः । देवास्तइन्द्रसख्याया२३ ४ ५ ।
२र१र २ ४ २ २
औहौहोयि । औ३हो३यि । औ३२३४५वा६५६ । ए३ ।
२र१ ११११
येमिरा२३४५यि(३) ॥ १७ † ॥ [१] २२

* 'एतदुक्तं भवति—त्वदीयाय सख्याय यात्मानं नियेमिरे'—इति वि० ।

† ऊ० गा० ३प्र० १ख० १७गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीय-तृचे*—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
असाविसोमइन्द्रतेशविष्ठधृष्णवागहि।
१ २ ३ २उ ३ २ ३ ३२ १ २
आत्वापृणक्त्विन्द्रियꣳरजःसूर्य्योनरश्मिभिः॥ १ †॥

हे "इन्द्र!" "ते" त्वदर्थं "सोमः" "असावि" अभिषुतोऽभूत्। हे "शविष्ठ" अतिशयेन बलवन्! अतएव "धृष्णो" शत्रूणां धर्षयितः! इन्द्र! "आगहि" देवयजनदेशमागच्छ, आगतञ्च "त्वा" त्वाम् "इन्द्रियं" सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् "आ पृणक्तु" आपूरयतु। "रजः" अन्तरिक्षं "रश्मिभिः" किरणैः "सूर्यो न" यथा सूर्यः पूरयति तद्वत् [शविष्ठ--शवस्विन्-शब्दादिष्ठनि विन्मतोर्लुक्, "टेः (६,४,११५)"—इति टि-लोपः, पादादित्वान्निघाताभावः (८,१,१८)। गहि—गमेर्लोटि "बहुलंछन्दसि (२,४,७३)"—इति शपो लुक्, "अनुदात्तोपदेश (६,४,३७)"—इत्यादिना अनुनासिक-लोपः, तस्य असिद्धवदत्रा-भात् (६,४,२२)"—इत्यसिद्धत्वाद्धेर्लुगभावः॥ १॥

---

* 'महावैश्वामित्रं साम'—इति वि०।

† छ० आ० ४, २, १, ६ (१भा० ७०९४०)=ऋ० वे० १, ६, ५, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ ३१२ ३ २ ३ १ १ ३ १ १
आतिष्ठवृत्रहन्रथंयुक्तातेब्रह्मणाहरी।
३ १ ३ २ ३ २ ३ १ २ ३ १ २
अर्वाचीनꣳसुतेमनोग्रावाकृणोतुवग्नुना॥ २ *॥

हे "वृत्रहन्" शत्रूणां हन्तः इन्द्र! "रथम्"† "आ तिष्ठ" आरोह। यस्मात् "ते हरी" त्वदीयावश्वौ "ब्रह्मणा" स्तोत्र-लक्षणेन मन्त्रेण‡ "युक्ता" रथेऽस्माभिर्योजितौ [ "सुपां सुलुग् (७,१,३९ )"—इत्याकारः] तस्मात् त्वं रथमातिष्ठ। "ते मनः" त्वदीयं मनश्च 'ग्रावा" अभिषवार्थं प्रवृत्तः पाषाणः "वग्नुना" वञ्चनीयेनाभिषवशब्देन [ "वचेर्गश्च (उ० ३, ३३ )"—इति नु-प्रत्ययो गकारश्चान्तादेशः] "अर्वाचीनम्"—अस्मदभिमुखं "सुकृणोतु" सुष्ठु करोतु॥ २॥

अथ तृतीया।

२ ३१र २र ३ १ २
इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम्।
१ २ ३१र २र३२३ १ २
ऋषीणाꣳसुष्टुतीरुपयज्ञञ्चमानुषाणाम्॥ ३ ¶॥ २३

॥ इति तृतीयः प्रपाठकः॥

---

* ऋ० वे० १, ६, ५, २=य० वे० ८, ३९।

† 'रथं—रंहणीयं वेगवन्तम्'—इति वि०।

‡ 'ब्रह्मणा—त्रैविद्य-लक्षणेन अथवा ब्रह्मणा अन्नेन। अथवा ब्रह्मणा हिरण्य-गर्भेण'—इति वि०।

¶ ऋ० वे० १, ६, ५, २=य० वे० ८, ३४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अप्रतिधृष्टशवसं" केनाप्यधर्षितबलमहिंसितबलमित्यर्थः "इन्द्रमित्"*इन्द्रमेव "ऋषीणां" वसिष्ठादीनां† "मानुषाणाम्" अन्येषां मनुष्याणाञ्च "सुष्टुतीः" शोभनाः स्तुतीः "यज्ञञ्च" "हरी" अश्वौ "उप वहतः" समीपं प्रापयतः। यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ति तत्र सर्वत्रेन्द्रमश्वौ प्रापयत इत्यर्थः। [ मानुषाणाम् "मनोर्जातौ (४,१,१६१)"—इति मनु-शब्दादञ् षुगागमश्च ] ॥ "ऋषीणां सुष्टुतीः"-"ऋषीणाञ्चस्तुतीः"—इति पाठौ ॥३॥ २३

॥ महावैश्वामित्रम् ॥ हयायि। हया२। ओहा ओहा। (एवन्तिः) असाविसो। मइन्द्राता२यि। शविष्ठधा। ष्णुवागाहो२। आत्वापृणा। क्तुइन्द्राया २म्। रजःसूर्य्यो। नरश्मायिभा२यिः ॥(१) आतिष्ठ वा। वृहन्नाथा२म्। युक्तातेब्रा। ह्मणाहारी२। अर्वाचीनाम्। सुतेमाना२ः। ग्रावाक्तणो। तुवनूना २॥(२) इन्द्रमिद्धा। रीवहाता२ः। अप्रतिधा। ष्टश

* 'इत्—इति पदपूरणः'—इति वि०।

† 'ऋषीणां –दर्शन-समर्थानाम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वासा२म्। ऋषीणाम्। इतीहपा२। यज्ञश्वमा।
नुषाणा२म्। यज्ञश्चा। मानुषाणा२म्। हयायि।
हया३। ओहाओहा। ३। हो४इडा। २। हो२३४५ई।
डा(३)॥ १८ *॥ [१]

॥ त्वष्ट्रीसाम †॥ असाविसो३हा। मइन्द्राता२यि।
प्रविष्ठधा३हा। ए३वागाही२। आत्वापृणा३हा। क्रतु
इन्द्राया२म्। रजःसूर्यो३हा। नरा३हो२३४। वा।
स्मा५यिभो६हायि॥(१) आतिष्ठवा३हा। वृत्रहन्नाथा२
म्। युक्तातेब्रा३हा। ह्मणाहारी२। अर्वाचीना३ए
हायि। सुतेमाना२ः। ग्रावाकृणो३हा। तुवा३हो२
३४। वा। म्ने५नो६हायि॥(२) इन्द्रमिद्धा३हा। री
वहाता२ः। अप्रतिधा३हा। इष्टप्रवासा२म्। ऋषी

* उ० गा० ३प्र० १ख० १८सा०।

† 'वारत्वाष्ट्री'—इति क० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २ २ ३ २र १ १ २ २ ३र २
णा॒ऽसूइद्वा । ष्टुतीहूपा२ । यज्ञश्चा३हायि । मानू३
१ ५ ४ ५
द्वो२३४ । वा । षा५णो६हायि(३) ॥ १८ * ॥ [२]

५ र ३ ५ ४ ५ १
॥ गौरीवितम् ॥ असा । विसो३ । मइन्द्रतायि । घ्न
र १ र २ ४
विष्ठधृष्णुवागहा२३यि । आत्वापृणा३१२३ । तुदी५द्रि
१ र २ ४ ५ ४ ५
याम् । राजःसूर्यो३१२३ । नरोवा । भ्सा५यिभो६हा
५र ३ २ ४ ५ १ र र
यि ॥(१) आति । ष्ठवा३ । तृहन्थाम् । युक्तातेब्रह्म
र १ र र २ ४ १
णाहरा२३यि । आर्वाचीना३१२३म् । सुते५मनाः । ग्रा
र २ ४ ५ ४ ५ ५
वाक्णो३१२३ । तुवोवा । नू५नो६हायि ॥(२) इन्द्रम् ।
३ २ ४र ५ १ १ २र
दूद्वा३ । रीवहताः अप्रतिधृष्ठशवसा२३म् । आर्षी
र २ ४ १ २ ४र
णाऽसू३१२३ । ष्टुती५हूपा । याज्ञञ्चा३१२३ । मानो
५ ५
वा । षा५णो६हायि(३) ॥ ४ † ॥ [३] २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य
सप्तमः खण्डः ॥ ७ ‡ ॥

---

* ऊ० गा० २२प्र० २ख० १८सा० ।

† ऊ० गा० २३प्र० १ख० ४सा० ।

‡ 'द्वादशाध्यायस्य पञ्चमखण्डः परिसमाप्तः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ ६॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे उत्तराग्रन्थे षष्ठोऽध्यायः* ॥

---

* 'तृतीयः प्रपाठकः परिसमाप्तः'—इति वि॰ मूलग्रन्थसम्मतश्च।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

